# मदनपालनिघण्टुः ।

[illegible]न्मदनपाल नृपतिना विरचितः ।

पण्डितकुलपति
[illegible]ानन्द विद्यासागर भट्टाचार्य्यात्मजेन
[illegible]त श्रीआशुबोध विद्याभूषण भट्टाचार्य्येण
तथा
[illegible]ण्डत श्रीनित्यबोध विद्यारत्न भट्टाचार्य्येण
परिवर्द्धित, परिवर्त्तित, संस्कृत सम्नीकृत
प्रकाशितश्च ।

तृतीय संस्करणम् ।

कलिकातानगर्य्याम्

[illegible], यन्त्र श्रीदक्षिणाचरण चक्रवर्त्तिना
मुद्रित ।

१८०२ ।

अथ मदनपालनिघण्टौ वर्गानुक्रमेण

# सूचीपत्रम्।

| विषयाः | पृष्ठाङ्काः । |
|---|---|

अथ मांसवर्गः ।

सूचीपत्र सम्पूर्णम्।



# सर्वौषधिनामगुणानाम्
## निघण्टुः ।

### मङ्गलाचरणम् ।

बीजं स्तुतीनां सुधनं सुनीनां
जीवं जडानां महदादिकानाम् ।
ध्यान्वेयमव्यं भवपारकानां
किञ्चिन्महः श्यामलमाश्रयामि ॥ १ ॥
लुब्धा कपोलमधुवारिमधुव्रताली
कुम्भस्थलो मधुविभूषणलोहिताङ्गी ।
माणिक्यमौलिरिव राजति यस्य मौलौ
विघ्नं स धुनयतु विघ्नपतिः सदा नः ॥ २ ॥
यो ध्वान्तमत्यतिगभीरपयोधिमध्या-
न्निष्कासयत्यशरणं भुवनं निमज्जत् ।
दत्त्वा जगत्त्रयहितः स्वकरावलम्बं
वाञ्छां स वो दिनकरः सफलीकरोतु ॥ ३ ॥
मिथ्यागमादिखलदोषचयैः स कोपा-
दत्यन्तमुर्वरित उपद्रवनक्रभीमे ।
रोगाम्बुधौ भवजनस्य निमज्जतो यः
पोतः प्रयच्छतु शुभानि स काशिराजः ॥ ४ ॥
केचित्सन्ति निघण्टवोऽतिमहतः केचिन्महान्तः परे
केचिद् दुर्गमनामकाः कतिपये भाषाः स्वभावोज्झिताः ।
सम्प्रत्यातिमधुरं चातिविपुलः ख्यातादिनाम्ना सतां
प्रीत्यै द्रव्यगुणान्वितोऽयमधुना ग्रन्थो मया बध्यते ॥ ५ ॥

सर्वं कायेन संसाध्यं तस्यायुः स्थितिकारणम् ।
आयुर्वेदोपदेशस्तु कस्य न स्यात् फलावहः ॥ ६ ॥
तत्रापि पूर्वं ज्ञातव्या द्रव्यनामगुणागुणाः ।
अतस्त एव वक्ष्यन्ते तज्ज्ञाने हि क्रियाक्रमः ॥ ७ ॥

अथ हरीतकीनामगुणाः ।

हरस्य भवने जाता हरिता च स्वभावतः ।
हरयेत् सर्वरोगांश्च तेन प्रोक्ता हरीतकी ॥ ८ ॥
जीवन्ती पूतना पथ्यामृता विजयाभया ।
रोहिणी चेतकी सप्तभेदभिन्ना हरीतकी ॥ ९ ॥
जीवन्ती जीवनोद्योगात् पावनात् पूतनामृता ।
सुधावदमृता श्रेया विजया विजयप्रदा ॥ १० ॥
नृणामभयदा यस्मादभया तत् प्रकीर्त्तिता ।
रोहिणी तु गुणारोहाश्चेतनाच्चेतकी मता ॥ ११ ॥
जीवन्ती स्वर्णवर्णाभा पूतनास्थिमती मता ।
अमृता त्रिदला प्रोक्ता विजया तुम्बरूपिणी ॥ १२ ॥
पञ्चाङ्गी त्वभया श्रेयामृता वृत्ता तु रोहिणी ।
त्र्यङ्गी तु चेतकी श्रेया कर्म्म तासामथोच्यते ॥ १३ ॥
सर्वरोगेषु जीवन्ती प्रलेपे पूतना हिता ।
शुद्ध्यर्थममृता प्रोक्ता विजया सर्वरोगहृत् ॥ १४ ॥
अक्षिरोगेऽभया शस्ता रोहिणी व्रणरोहिणी ।
चेतकी चूर्णयोगे स्यात् सप्तधैव प्रकीर्त्तिता ॥ १५ ॥
नवा स्निग्धा घना वृत्ता गुर्वी क्षिप्ता च याम्भसि ।
निमज्जेत् सा प्रशस्ता स्याद्रोगघ्नीति गुणप्रदा ॥ १६ ॥
शीर्णाच्छिन्ना गुडनिभा किञ्चिदल्पा कषायणी ।
स्थूलत्वक् सरसा स्वल्पबीजा गुर्वी हरीतकी ॥ १७ ॥
चर्विता वर्द्धयत्यग्निं पेषिता मलशोधिनी ।

स्विन्ना सङ्ग्राहिणी पथ्या श्रेष्ठा प्रोक्ता त्रिदोषनुत् ॥१८॥

ग्रीष्मे तुल्यगुडां सुसैन्धवयुतां मेघावनद्धेऽम्बरे
तुल्यां शर्करया शरद्यमलया शुण्ठ्या तुषारागमे ।
पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजिता
राजन् ! प्राप्य हरीतकीमिव रुजो नश्यन्ति ते शत्रवः ॥१९॥

शिवा हरीतकी पथ्या चेतकी विजया जया ।
अव्यथा अभया मोघा कायस्था प्राणदामृता ॥ २० ॥
जीवनीया हैमवती पूतना हतनाभया ।
वयस्था नन्दिनी श्रेया श्रेयसी रोहिणी तथा ॥ २१ ॥
हरीतकी पञ्चरसा लवणा तुवरोत्कटा ।
रूक्षोष्णा दीपनी मेध्या स्वादुपाका रसायनी ॥ २२ ॥
सरा बुद्धिप्रदा हृद्या चक्षुष्या बृंहणी लघुः ।
श्वासकासप्रमेहार्शःकुष्ठशोफोदरान् कृमीन् ॥ २३ ॥
वैस्वर्यग्रहणीदोषविबन्धविषमज्वरान् ।
गुल्माध्मानव्रणच्छर्दिहिक्काकण्डूहृदामयान् ॥ २४ ॥
कामलां शूलमानाहं प्लीहानं चापकर्षति ।
मधुराम्लतया वातं कषायत्वादुभावतः ।
पित्तं हन्ति कफं हन्ति कटुकेन हरीतकी ॥ २५ ॥

अथ आमलकनामगुणाः ।

धात्रीफलामृतफलमामलकं श्रीफलं शिवम् ।
तद्वद्धात्रीफलं हृद्यं विशेषाद्रक्तपित्तजित् ॥ २६ ॥
अम्लत्वात् पवनं हन्ति पित्तं माधुर्यशैत्यतः ।
कफं रूक्षकषायत्वात् तस्मात् किमधिकं फलम् ॥ २७ ॥

अथ विभीतकनामगुणाः ।

विभीतकः कर्षफलो भूतावासः कलिद्रुमः ।
पाराम्नोऽक्षो हरजातः सपर्णास्तिमपुष्पकः ॥ २८ ॥

विभीतकः स्वादुपाकः कषायः कफपित्तनुत्।
उष्णवीर्यो हिमस्पर्शो भेदनः कासनाशनः।
रूक्षो नेत्रहितः केश्यो मज्जा तीयदकारकः॥२८॥

## अथ त्रिफलानामगुणाः।

हरीतक्यास्त्रयो भागा शिवा द्वादशभागिकाः।
षड्भागाः स्युर्विभीतस्य त्रिफलेयं प्रकीर्त्तिता॥३०॥
पित्तं माधुर्य्यशैत्याभ्यां कफं रूक्षकषायतः।
त्रिफलैतत्त्रयेण स्याद्वरा श्रेष्ठा फलोत्तमा॥ ३१ ॥
त्रिफला कुष्ठमेहार्शःकफपित्तविनाशिनी।
चक्षुष्या रोपणी हृद्या वयसः स्थापिनी परा॥ ३२ ॥

## अथ भूधात्रीनामगुणाः।

भूधात्री बहुपत्री स्यादमृतामलका शिवा।
भूधात्री वातकृत्तिक्ता कषाया मधुरा हिमा।
पिपासाकासपित्तास्रकृमिपाण्डुक्षतापहा॥ ३३ ॥

## अथ प्राचीनामलकीनामगुणाः।

प्राचीनामलको प्राची नागरं रक्तकं सतम्।
तत्पक्वं पित्तकफहृत् उष्णं गुरुसमीरजित्॥ ३४ ॥

## अथ उत्पाटारूपकनामगुणाः।

अरूमकेणाववासा वृषा सिंहमुखी भिषग्।
सिंहपर्णी वृषो वासा सिंहकोत्पाटरूपकः॥ ३५ ॥
वासको वातकृत्स्वर्य्यः कफपित्तास्रनाशनः।
श्वासकासज्वरच्छर्द्दिमेहकुष्ठक्षयापहः॥ ३६ ॥

## अथ गुडूचीनामगुणाः।

गुडूची कुण्डली छिन्ना वयस्थामृतवल्लरी।
छिन्नोद्भवा छिन्नरुहामृता ज्वरविनाशिनी॥ ३७ ॥
वत्सादनी चन्द्रहासा जीवन्ती चक्रलक्षणा।

गुडूची कटुका लघ्वी स्वादुपाका रसायनी ॥ ३८ ॥
संग्राहिणी कषायोष्णा बल्या तिक्ताग्निदीपनी ।
कामला कुष्ठवातास्रज्वरपित्तक्रिमीन् जयेत् ॥ ३९ ॥
घृतेन वातं सगुडा विबन्धं पित्तं सिताढ्या मधुना कफञ्च ।
वातास्रमुग्रं रुबुतैलमिश्रा शुण्ठ्यामवातं शमयेद्गुडूची ॥४०॥

अथ बिल्वनामगुणाः ।

बिल्वः शलाटुः शैलूषो मालूरश्च सदाफलः ।
लक्ष्मीफलो गन्धगर्भः शाण्डिल्यः कण्टकी मतः ॥ ४१ ॥
बिल्वं ग्राहि कषायोष्णं कटु दीपनपाचनम् ।
हृद्यं बाल्यं लघु स्निग्धं तिक्तं वातकफापहम् ॥४२॥
पक्वं गुरु त्रिदोषं स्याद् दुर्जरं पूतिमारुतम् ।
विदाहि विष्टम्भकरं मधुरं वह्निमान्द्यकृत् ।
अह्योकफवातामशूलघ्नी बिल्वपेशिका ॥ ४३ ॥

अथ अरणिनामगुणाः ।

अग्निमन्थो जयः केतुररणिर्वैजयन्तिका ।
अग्निमन्थः श्वयथुघ्नो वीर्योष्णः कफवातनुत् ॥ ४४ ॥

अथ पाटलानामगुणाः ।

पाटला कामदूती स्यात् कुम्भिका कामहन्तिका ।
स्थाल्यलिधा मधोर्दूती ताम्रपुष्पाम्बुवासिनी ॥ ४५ ॥
अन्या फलेरुहा श्वेता कुम्भिका लघुपाटला ।
पाटलाद्वितयोष्णाश्च शमयेत् छर्दिनाशिनी ॥ ४६ ॥
अनुष्णं मधुरं स्याद् तत्पुष्पं कफरक्तनुत् ।
पित्तातिसारदाहघ्नं फलं हिक्कास्रपित्तनुत् ॥ ४७ ॥

अथ काश्मरीनामगुणाः ।

काश्मरी सर्वतोभद्रा श्रीपर्णी मधुपर्णिका ।
क्षमारी काश्मरा हीरा काश्मर्या भद्रपर्णिका ॥४८॥

काश्मरी ज्वरशूलघ्नी वीर्योष्णा मधुरा गुरुः ।
तत्पुष्पं वातलं ग्राहि पित्तासृक्प्रदरापहम् ॥४८॥
फलं रसायनं केश्यं बृंहणं शुक्रलं गुरु ।
वातपित्तक्षयक्षाररक्तशूलविबन्धनुत् ॥ ५० ॥

अथ श्योनाकनामगुणाः ।

श्योनाकः पृथुशिम्बिः स्यात् शुकनाशः कुटन्नटः ।
भूतहृच्च कट्वङ्गः टुण्टुकः शल्लको रलुः ।
मयूरजङ्घो भल्लूकः प्रियजीवः कटम्भरः ॥ ५१ ॥
श्योनाको दीपनः पाके कटुस्तुवरको हिमः ।
ग्राही तिक्तोऽनिलश्लेष्मपित्तकासविनाशनः ॥ ५२ ॥
टुण्टुकस्य फलं बालं रूक्षं वातकफापहम् ।
हृद्यं कषायमधुरं लघु रोचनदीपनम् ॥ ५३ ॥

अथ महत्पञ्चमूलनामगुणाः ।

बिल्वादिभिः पञ्चभिरेभिरेतत्स्यात्पञ्चमूलं महदग्निकारि ।
लघूष्णतिक्तं रसतः कषायं मेदःकफश्वाससमीरहारि ॥ ५४ ॥

अथ गोक्षुरनामगुणाः ।

त्रिकण्टकः कण्टफलो गोक्षुरः स्वादुकण्टकः ।
गोकण्टको भक्षटकः त्रिकण्टो व्यालदंष्ट्रकः ॥ ५५ ॥
श्वदंष्ट्रा स्थूलशृङ्गाटः षडङ्गः क्षुरकस्त्रिकः ।
गोक्षुरः शीतलः स्वादुर्बलकृद्वस्तिशोधनः ।
प्रमेहश्वासकासाश्मकृच्छ्रहृद्रोगवातजित् ॥ ५६ ॥

अथ शालपर्णीनामगुणाः ।

शालपर्णी ध्रुवा सौम्या त्रिपर्णी पीवरी स्थिरा ।
विदारिगन्धातिगुहा दीर्घमूलांशुमत्यपि ॥ ५७ ॥
शालपर्णी गुरुः छर्दिज्वरश्वासातिसारनुत् ।
शोषदोषत्रयहरा बृंहण्युक्ता रसायनी ॥ ५८ ॥

अथ पृश्निपर्णीनामगुणाः।

पृश्निपर्णी क्रोष्टुपुच्छा धावनी कलशाह्वया।
शृगालविन्नाहितिला पृथक्पर्णी च पर्णिका ॥ ५८ ॥
पृश्निपर्णी लघुर्वृष्या मधुरोष्णा विनाशयेत्।
रक्तातिसारदाहतृड्दोषत्रयवमिज्वरान् ॥ ६० ॥

अथ स्थूलभण्टाकीनामगुणाः।

बृहती स्थूलभण्टाकी विपदा च महोत्कटा।
भण्टाकी महती सिंही कण्टकी राष्ट्रिकाकुली ॥ ६१ ॥
बृहती ग्राहिणी हृद्या पाचनी कफवातजित्।
उष्णा कुष्ठज्वरश्वासशूलकासाग्निमान्द्यजित् ॥ ६२ ॥

अथ श्वेतकण्टकारीनामगुणाः।

कण्टारिका कण्टकिनी कण्टकारी निदिग्धिका।
दुःस्पर्शा धावनी क्षुद्रा व्याघ्री दुष्प्रधर्षिणी ॥६३॥
सिता क्षुद्रा चन्द्रहासा लक्ष्मणा क्षेत्रदूतिका।
कण्टकारी सरा तिक्ता कटुका दीपनी लघुः ॥ ६४ ॥
रूक्षोष्णा पाचनी कासश्वासज्वरकफानिलान्।
निहन्ति पीनसं पार्श्वपीडाकृमिहृदामयान्।
तद्वत् प्रोक्ता सिता क्षुद्रा विशेषात् गर्भकारिणी ॥६५॥

अथ लघुपञ्चमूलनामगुणाः।

इत्येतत् पञ्चमूलं स्यात् पञ्चभिर्गोक्षुरादिभिः।
बल्यं पित्तानिलहरं नात्युष्णं स्याद् रसायनम् ॥६६॥

अथ दशमूलनामगुणाः।

उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृतम्।
दोषत्रयश्वासकासशिरःपीडापतन्त्रकान्।
तन्द्राशोथज्वरानाहपार्श्वरुजो हरेत् ॥ ६७ ॥

अथ ऋद्धिवृद्धिनामगुणाः ।

ऋद्धिः सुखं युगं लक्ष्मीः सिद्धिः सर्वजनप्रिया ।
ऋषिसृष्टा रथाङ्गं स्यान्माङ्गल्यं श्रावणी वसुः ॥
योग्यं युग्या तुष्टिराशिर्वृद्धिरप्येतदाह्वया ॥ ६८ ॥
ऋद्धिर्बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरुः ।
दृश्विर्गर्भप्रदा शीता वृष्या कासक्षयास्रनुत् ॥ ६९ ॥

अथ काकोलीक्षीरकाकोलीनामगुणाः ।

काकोली मधुरा धीरा वायस्या क्षीरशुक्लिका ।
ध्वांक्षोली वायसोली स्यात् स्वादुमांसी पयस्विनी ॥७०॥
द्वितीया क्षीरकाकोली सुराह्वा क्षीरिणी मता ।
पीवरी सहशस्कन्धः स क्षीरः स सुगन्धकः ।
क्षीरकाकोलिकाख्यात पित्तदोषज्वरापहः ॥ ७१ ॥
काकोलीयुगलं शीतं शुक्रलं मधुरं गुरु ।
जयेत्समीरदाहास्रपित्तशोषक्षयाज्वरान् ॥७२॥

अथ मेदामहामेदानामगुणाः ।

मेदा श्रेया शालपर्णी वृष्या मेदोद्भवा धरा ।
महामेदा मणिच्छिद्रा वदन्ता देवता मणिः ॥७३॥
मेदायुग गुरु स्वादु वृष्यं स्तन्यकफापहम् ।
वृ हणं शीतलं रक्तं पित्तक्षयसमीरनुत् ॥७४॥

अथ जीवकर्षभकनामगुणाः ।

जीवको मधुरः शृङ्गी ह्रस्वाङ्गः कूर्चशीर्षकः ।
ऋषभो वीर इन्द्राची विषाणी दुर्धरो वृषः ॥७५॥
जीवकर्षभकौ वल्यौ शीतौ शुक्रकफप्रदौ ।
हरतः पित्तदाहास्रकासवातक्षयामयान् ॥७६॥

अथ अष्टवर्गनामगुणाः ।

अष्टवर्गोऽष्टभिर्द्रव्यैरेतैः शीतोऽतिशुक्रलः ।

बृंहणः पित्तदाहास्रशोषघ्नस्तन्यगर्भकृत् ॥७७॥

अथ जीवन्तीनाम गुणाः ।

जीवन्ती जीवनी जीवा जीवनीया यशस्करी ।
शाकश्रेष्ठा शीवभद्रा माङ्गल्या जीववर्द्धनी ॥७८॥
जीवन्ती शीतला स्वादुः स्निग्धा दोषत्रयापहा ।
रसायनी बलकरी चक्षुष्या ग्राहिणी लघुः ॥७९॥

अथ मधुयष्टीनामगुणाः ।

मधुयष्टी क्लीतनकं यष्टी मधु मधूलिका ।
यष्ट्याह्वं मधुकं यष्टिमधुकं जलजा मधुः ।
मधुयष्टी गुरुः शीता वल्या दृक् छर्दिपित्तजित् ॥८०॥

अथ माषपर्णीमुद्गपर्णीनामगुणाः ।

माषपर्णी हयाह्वा काम्बोजी हयपुच्छिका ।
मांसमाषा सिंहमुखी स्वादुमाषा महासहा ॥८१॥
मुद्गपर्णी क्षुद्रसहा सूर्य्यपर्णी कुरङ्गिणी ।
वनजा रिङ्गिणी शिम्बी सिंही मार्जारगन्धिका ॥८२॥
माषपर्णी हिमा तिक्ता रूक्षा शुक्रबलासकृत् ।
मधुरा ग्राहिणी शोथवातपित्तज्वरास्रनुत् ।
तद्वदेवमुद्गपर्णी षड्दोषघ्नीहरा लघुः ॥८३॥

अथ जीवनीयनामगुणाः ।

जीवन्ती सूर्य्यपर्णीयुक् काकोल्यौ जीवकर्षभौ ।
मेदोयष्टीति मधुरो जीवनीयगणो गुरुः ॥८४॥
शुक्रकृद् बृंहणः शीतः स्तन्यगर्भकफप्रदः ।
रक्तपित्तक्षयशोषज्वरदाहप्रतापहः ॥८५॥

अथ एरण्डकोरण्डनामगुणाः ।

एरण्डो दीर्घदण्डः स्यादामण्डो वर्द्धमानकः ।
चित्रः पञ्चाङ्गुलो व्याघ्रः पुष्पो गन्धर्वहस्तकः ॥८६॥

रक्तैरण्डो हस्तिकर्णो व्याघ्रो व्याघ्रतरो लघुः ।
उत्तानपत्र उरुबु वातारी च चुञ्चुना ॥८७॥
एरण्डः सुखः मधुरसुष्णः गुरु विनाशयेत् ।
शूलशोथकटीवस्तिशिरः पीडोदरज्वरान् ॥८८॥
ब्रध्नश्वासकफानाहकासकुष्ठाममारुतान् ।
तत्फलं भेदनं स्वादु क्षारमुष्णं समीरजित् ॥८९॥
अथ काष्ठसारिवाकृष्णसारिवानामगुणाः ।
शारिवा शारदास्फोता गोपकन्या प्रतानिका ।
गोपाङ्गना गोपवल्ली लताह्वा काष्ठशारिवा ॥९०॥
शारिकन्या कृष्णमूली भद्रा चन्दनशारिवा ।
भद्रा चन्दनगोपा च चन्दना कृष्णवल्ल्यपि ॥९१॥
सारिवायुगलं स्वादु स्निग्धं शुक्रकरं गुरु ।
अग्निमान्द्यारुचिश्वासकासामविषनाशनम् ।
दोषत्रयास्रप्रदरज्वरातीसारनाशनम् ॥ ९२ ॥
अथ यवासधन्वयवासनामगुणाः ।
यासो मरुद्भवोऽनन्तो दीर्घमूलो यवासकः ।
बालपत्रः समुद्रान्तो दूरमूलोऽतिकण्टकः ॥९३॥
धन्वयासस्ताम्रमूली दुःस्पर्शा स्याद् दुरालभा ।
यासकः कच्छुरा चाम्रमूलो धन्वयवासकः ॥९४॥
यासः स्वादुरसस्तिक्तो हिमः पित्तहरो लघुः ।
हन्ति रक्तकफभ्रान्तीस्तद्वद्धन्वयवासकः ॥ ९५ ॥
अथ मुण्डीनामगुणाः ।
मुण्डी भिक्षुः परिव्राजी यावनी स्यात् तपोधना ।
श्रावणी श्रीमती मुण्डी तिक्ता श्रावणशीर्षका ॥९६॥
मुण्डी तिक्ता कटुः पाके वीर्योष्णा मधुरा लघुः ।
मेध्या गण्डापचीकृच्छ्रकृमियोन्यर्तिपाण्डुजित् ॥९७॥

अथ महामुण्डीभूमिकदम्बनामगुणाः ।

महामुण्डी लोमशीया छिन्नपर्ण्यौनिका स्मृता ।
भूलग्नः कुलहन्ता च मधुगन्धूकदम्बकः ।
कदम्बपुष्पमुण्डीवत् गुणैर्भूमिकदम्बकः ॥९८॥

अथ अपामार्गनामगुणाः ।

अपामार्गस्तु शिखरी किणिही खरमञ्जरी ।
अधःशल्यः शैखरिकः प्रत्यक्पुष्पी मयूरका ॥ ९९ ॥
अपामार्गः सरस्तीक्ष्णो दीपनः कफवातजित् ।
निहन्ति दद्रुसिध्मार्शःकण्डूशूलोदरारुचीः ॥१००॥

अथ रक्तापामार्गनामगुणाः ।

अन्यो रक्तो हस्तिफलो वशिरः कपिपिप्पली ।
अपामार्गोऽरुणो वातविष्टम्भी कफनाशनः ।
कर्म पूर्वगुणैः कषायस्तम्भनं रक्तपित्तनुत् ॥१०१॥

अथ काम्पिल्लनामगुणाः ।

काम्पिल्लो रेचनी रक्तपर्णको मलशोधनः ।
लोहितो रक्तगमनो रेचो रञ्जनको मतः ॥१०२॥
काम्पिल्लः कफपित्तास्रकृमिगुल्मोदरव्रणान् ।
हन्ति रेची कटूष्णश्च तत्फलाग्रं पाति गौतमम् ॥१०३॥

अथ दन्तीनामगुणाः ।

दन्ती गुणप्रिया नागदन्ती शीघ्रानुकूलकः ।
उपचित्रानुकूलाख्या आदिमन्तोदुम्बरच्छदा ॥१०४॥
घाणुपर्णी हर्षवन्ध्या दन्ती भद्रा मता ।
मूषकाह्वा सुतश्रेणी प्रत्यक्श्रेणी च चम्पिका ॥१०५॥
दन्तीद्वयं सरं पाके रसयोः कटु दीपनम् ।
तीक्ष्णोष्णं हन्ति पित्तास्रकफशोफोदरान् कृमीन् ॥१०६॥

अथ जयपालनामगुणाः ।

जयपालो दन्तीबीजं ख्यातं तत् तित्तिरीफलम् ।
जयपालो गुरुस्निग्धो रेचो पित्तकफापहः ॥१०७॥

अथ श्वेतत्रिवृन्नामगुणाः ।

त्रिवृत् शुभ्रोऽरुणा त्रासभण्डी कूटरवाहिनी ।
सर्वानुभूतिस्त्रिवृता त्रिपुटा सरलासिता ॥१०८॥
त्रिवृत्तिक्ता सरा रूक्षा स्वादुरुष्णा समीरकृत् ।
कटुः पाके ज्वरश्लेष्मपित्तशोफोदरापहा ॥१०९॥

अथ कृष्णत्रिवृन्नामगुणाः ।

त्रिवृत्काला कालमेषी कालपर्ण्यर्द्धचन्द्रिका ।
सुखेनाख्याम्लालिविका मसूरा विदलान्विता ॥११०॥
त्रिवृत्काला हीनगुणा तस्यास्तीव्रविरेचिनी ।
मूर्च्छादाहमदभ्रान्तिवान्तिकार्यणकारीणी ॥१११॥

अथ इन्द्रवारुणीद्वयनामगुणाः ।

इन्द्रवारुण्यथैन्द्राह्वं हयमाक्षी गवादनी ।
ऐन्द्रवारुः क्षुद्रफला विपालैन्द्री ह्यादनी ॥११२॥
अन्येन्द्रवारुणी चित्रफला चित्रमहाफला ।
आत्मरक्षा नागदन्ती वपुषी गजचिर्भटी ॥११३॥
श्वेतपुष्पी मृगाक्षी च तथा यक्षसुरा मता ।
मरुद्भवा क्षमिगुहा चित्रदेवी च कीर्त्तिता ॥११४॥
ऐन्द्रवारुद्वयं तिक्तं कटुपाके सरं लघु ।
वीर्योष्णं कामलापित्तकफश्लीहोदरापहम् ॥११५॥

अथ आरग्वधनामगुणाः ।

आरग्वधो राजवृक्षः शम्याकः कृतमालकः ।
व्याधिघातः कर्णिकारः प्रग्रहश्चतुरङ्गुलः ॥११६॥
आरोग्यशिम्बी स्वर्णाटः कर्णी दीर्घफलो मतः ।

कुण्डली हिमपुष्पा च कलिख्यातो नृपद्रुमः ॥११७॥
स्वर्णशेफालिका श्यावा कुष्ठसूदननाम तत् ।
स्वर्णाख्याल्या पित्तला च सुवर्णद्रुम ईरितः ॥११८॥
आरग्वधो गुरुः स्वादुः शीतलो मृदुरेचनः ।
ज्वरहृद्रोगपित्तास्रवातोदावर्त्तशूलजित् ॥ ११९ ॥
तत्पुष्पं वातलं ग्राहि तिक्तं पित्तकफापहम् ।
तन्मज्जा मधुरः पाके तिक्तः पित्तसमीरजित् ॥ १२० ॥

अथ नीलिनीनामगुणाः ।

नीलिनी नीलिका ग्राम्या श्रीफला भारवाहिनी ।
रञ्जनी कालिकामेला तूणी रूक्षा विशोधिनी ॥ १२१ ॥
नीलिनी रेचनी तिक्ता केश्या मोहभ्रमापहा ।
उष्णा हन्त्युदरप्लीहवातपित्तकफानिलान् ॥ १२२ ॥

अथ कटुकीनामगुणाः ।

कटुकी रोहिणी तिक्ता चक्राङ्गी कटुरोहिणी ।
मत्स्यपित्ता पाण्डुवहा काण्डभेदा हिजाङ्गिका ।
अशोका रोहिणी मत्स्या सकुला सकुलादिनी ॥ १२३ ॥
कटुकी कटुपाके च तिक्ता रूक्षा सरा लघुः ।
हिमा हन्ति क्रमिश्वासदाहपित्तकफज्वरान् ॥ १२४ ॥

अथ अङ्कोलकनामगुणाः ।

अङ्कोलकस्ताम्रफलः पीतसारो निकोचकः ।
गुप्तस्नेहो विरेची स्यात् भूषितो दीर्घकीलकः ॥ १२५ ॥
अङ्कोलकः कटुस्निग्धतीक्ष्णोष्णस्तुवरो लघुः ।
रेचनः क्रमिशूलामशोफशोषविषापहः ॥ १२६ ॥
तत्फलं शीतलं स्वादु श्लेष्मलं बृंहणं गुरु ।
बल्यं विरेचनं वातपित्तदाहक्षयास्रजित् ॥ १२७ ॥

अथ सेहुण्डनामगुणाः ।

सेहुण्डो वज्रतुण्डस्तु गाण्डीरो वज्रकण्टकः ।
सुहीऽमथ दुग्धोऽसिपत्रो वज्री महातरुः ॥ १२८ ॥
सेहुण्डो रेचनस्तीक्ष्णो दीपनो कटुको गुरुः ।
शूलामाष्ठीलिकाध्मानगुल्मशोफोदरानिलान् ।
हन्ति दूषीविषश्लीहकुष्ठोन्मादाश्मपाण्डुताः ॥ १२९ ॥

अथ निम्बनामगुणाः ।

निम्बो नियमनो नेतारिष्टः स्यात्पारिभद्रकः ।
सुतिक्तः सर्वतोभद्रः पिचुमन्दः प्रभद्रकः ॥ १३० ॥
कुष्ठहा देवदत्तश्च रविसंक्रिमसूर्य्यकः ।
निम्बः शीतो लघुः ग्राही कटुपाकोऽग्निवातनुत् ॥१३१॥
व्रणपित्तकफच्छर्दिकुष्ठहृल्लाससेहनुत् ।
निम्बपत्रं स्मृतं नेत्र्यं क्रिमिपित्तविषप्रणुत् ॥ १३२ ॥
तत्फलं भेदनं स्निग्धमुष्णं कुष्ठहरं लघु ।
अपक्वं पाचयेन्निम्बः पक्वञ्चापरिशोषयेत् ॥ १३३ ॥

अथ महानिम्बनामगुणाः ।

महानिम्बो निम्बकरः कार्मुको विषमुष्टिकः ।
रम्यको गिरिकोद्रेकाधारः स्यात् केशमुष्टिकः ॥१३४॥
महानिम्बो हिमो रूक्षस्तिक्तो ग्राही कषायकः ।
कफपित्तक्रिमिच्छर्दिकुष्ठहृल्लासरक्तजित् ॥१३५॥

अथ किराततिक्तनामगुणाः ।

किराततिक्तः कैरातो भूनिम्बो रामसेनकः ।
किरातकोऽन्यो नैपालो नाडितिक्तो ज्वरान्तकः ।
काण्डतिक्तोऽर्द्धतिक्तः स्याच्चिद्रारिः सन्निपातहा ॥१३६॥
किरातो वातलो रूक्षः शीतलस्तिक्तको लघुः ।
सन्निपातज्वरश्वासकासपित्तास्रदाहनुत् ॥१३७॥

अथ कुटजनामगुणाः ।

कुटजो मल्लिकापुष्पः कलिङ्गो गिरिमल्लिका ।
वत्सकः कुटजः कोटिवृक्षकः शक्रमूरुहः ॥१३८॥
कुटजः कटुको रूक्षो दीपनस्तुवरो लघुः ।
अर्शोऽतिसारपित्तास्रकफतृष्णामकुष्ठनुत् ।
तत्पुष्पं वातलं शीतं तिक्तं पित्तातिसारजित् ॥१३९॥

अथ इन्द्रयवनामगुणाः ।

ऐन्द्रयवस्तस्य फल कालिङ्गः कोटजो मतः ।
शक्राह्वः पुरुहूतश्च शोक्षो भद्रयवस्तथा ॥१४०॥
ऐन्द्रयवस्त्रिदोषघ्नः संग्राही शीतलः कटुः ।
ज्वरातिसाररक्तार्शःकृमिवीसर्पकुष्ठनुत् ॥१४१॥

अथ मदननामगुणाः ।

मदनः छर्दनः पिण्डो राढपिण्डान्तकं फलम् ।
करहाटश्च तगरः शल्यको विषपुष्पकः ॥१४१॥
मदनो वमनस्तिक्तो वीर्योष्णो लेखनो लघुः ।
रूक्षः कुष्ठकफानाहशोफगुल्मव्रणापहः ॥१४३॥

अथ कङ्कुष्ठनामगुणाः ।

कङ्कुष्ठं कङ्काककुष्ठं रेचनं रङ्गनामकम् ।
शोधनं पुलकं हासं वराङ्गं कुष्ठवालुकम् ॥१४४॥
कङ्कुष्ठं रेचनं तिक्तं कटूष्णं वर्णकारकम् ।
कृमिशोफोदराध्मानगुल्मानाहकफापहम् ॥१४५॥

अथ हेमाह्वानामगुणाः ।

हेमाह्वा कनकक्षीरी हेमपुष्पी हिमावती ।
क्षीरिणी काञ्चनक्षीरी कटुपर्णी चिकर्षणी ।
तिक्तदुग्धा हैमवती पीतदुग्धा हिमाद्रिका ॥१४६॥

हेमाह्वा रेचनी तिक्ता मन्दाग्न्युत्क्लेदकारिणी ।
क्रमिकण्डूकफानाहविषकुष्ठविनाशनी ॥१४७॥

अथ सातलानामगुणाः ।

सातला विरला सारी सत्फला बहुफेनका ।
चर्म्मसाह्वा चर्म्मकसा फेना दीप्ता च नालिका ॥१४८॥
सातला कटुका पाके वातला शीतला लघुः ।
तिक्ता शोथकफानाहपित्तोदावर्त्तरक्तजित् ॥१४९॥

अथ अश्मन्तकनामगुणाः ।

अश्मन्तो मालुकापत्रो युग्मपत्रोऽम्लपत्रकः ।
ह्रस्वत्वगश्मयोनिः स्यात् कुशली पापनाशनः ॥१५०॥
अश्मन्तस्तुवरो ग्राही शीतोष्णः कफवातजित् ।
निहन्ति गण्डमालासृग्गलगण्डगलामयान् ।
तत्फलं लेखनं ग्राहि गुरुश्लेष्मानिलापहम् ॥१५१॥

अथ काञ्चनारनामगुणाः ।

काञ्चनारः काञ्चनकः पाकारी रक्तपुष्पकः ।
कोविदारोऽस्य भेदः स्यात् कुदालः कुद्दली कुली ।
चास्फोती दालकः स्वल्पकेसरश्चमरी मता ॥१५२॥
काञ्चनारो हिमो ग्राही तुवरः श्लेष्मपित्तनुत् ।
क्रिमिकुष्ठगुदभ्रंशगण्डमालाव्रणापहः ॥१५३॥
कोविदारोऽपि तद्वत् स्यात् पुष्पं शीतं तयोर्लघुः ।
रूक्षं संग्राहि पित्तास्रप्रदरक्षतकासनुत् ॥१५४॥

अथ निर्गुण्डीद्वयनामगुणाः ।

निर्गुण्डी श्वेतकुसुमः सिन्दुकः सिन्दुवारकः ।
भूतकेश्यपरो नीलसिन्दुकः पुष्पनीलकः ॥१५५॥
शेफालिका शीतभीरुर्वनजोऽनिलसम्वरी ।
निर्गुण्डी स्मृतिदा तिक्ता कषाया कटुका लघुः ॥१५६॥

केश्या नेत्रहिता हन्ति शूलशोथाममारुतान्।
क्रिमिकुष्ठरुचिः श्लेष्मव्रणानीलापि तद्द्विधा ॥१५७॥

अथ मेषशृङ्गीनामगुणाः।

मेषशृङ्गी मेषवल्ली ससदंष्ट्राजशृङ्गिका।
अन्या तु दक्षिणावर्त्ता वृश्चिकाली विषाणिका ॥१५८॥
मेषशृङ्गी रसे तिक्ता वातला श्वासनाशनी।
रूक्षा पाके कटुः पित्तव्रणश्लेष्माक्षिशूलनुत् ॥१५९॥

अथ पुनर्नवाद्वयनामगुणाः।

पुनर्नवा श्वेतमूला शोथघ्नी दीर्घपत्रकः।
विषादर्दीर्घवर्षाभूः पुनर्भूर्मण्डलच्छदा ॥१६०॥
पुनर्नवा सरा तिक्ता रूक्षोष्णा मधुरा कटुः।
पुनर्नवारुणा तिक्ता रक्तपुष्पा कठिल्लका ॥१६१॥
क्रूरकः शुद्रवर्षाभूर्वर्षकेतुः शिवाटिका।
शोफानिलव्रणश्लेष्महरा रूक्षा रसायनी ॥१६२॥
पुनर्नवा परा तिक्ता कटुपाका हिमा लघुः।
वातला ग्राहिणी श्लेष्मरक्तपित्तविनाशनी ॥१६३॥

अथ रास्नानामगुणाः।

रास्ना रम्या युक्तरसा रसना गन्धनाकुली।
सुगन्धमूलातिरसा श्रेयसी सुवहा रसा ॥१६४॥
रास्नामपाचनी तिक्ता गुरूष्णा श्लेष्मवातजित्।
शोफश्वासमीरासवातशूलोदरापहा ॥१६५॥

अथ अश्वगन्धानामगुणाः।

अश्वगन्धा सुगन्धाख्या गोकर्णीवावरोहकः।
वराहकर्णी वरदा बल्या वाजीकरी हया ॥१६६॥
अश्वगन्धानिलश्लेष्मशोफश्वित्रक्षयापहा।
बल्या रसायनी तिक्ता कषायोष्णातिशुक्रला ॥१६७॥

अथ प्रसारणीनामगुणा ।

प्रसारणी राजवला चारुपर्णी प्रतानिका ।
शरणी सारणी भद्रपर्णी सुप्रसरा सरा ॥१६८॥
प्रसारणी गुरुर्वृष्या सन्धानवलकृत् सरा ।
वीर्य्योष्णा वातनुत् तिक्ता वातरक्तकफापहा ॥१६९॥

अथ शतावरीनामगुणा ।

शतावरी द्वीपिशत्रुर्हिंपकाधरकाण्टका ।
नारायणी शतपदी शतपाद् बहुपत्रिका ॥१७०॥
शतावरी गुरु शीता स्वादु स्निग्धा रसायनी ।
शुक्रस्तन्यकरा बल्या वातपित्तास्रशोफजित् ॥१७१॥

अथ महाशतावरीनामगुणा ।

शतावर्य्यूर्द्ध्वकण्टाख्या पीवरी धीवरी वरी
अभीरुर्बहुपत्रा च महापुरुषदन्तिका ।
सहस्रवीर्य्या केशी स्यात् तुङ्गिनी सूक्ष्मपत्रिका ॥१७२॥
महाशतावरी मेध्या हृद्या हृष्या रसायनी ।
शीतवीर्य्या निहन्त्यर्शोग्रहणीनयनामयान् ।
तदङ्कुरस्त्रिदोषघ्नो लघुरर्शः क्षयापहः ॥१७३॥

अथ बलानामगुणा ।

बला वाट्यालक शीतपाकी वाट्योदराह्वया ।
भद्रौदनी समङ्गा स्यात् समांसा खरयष्टिका ॥१७४॥

अथ सहदेवीनामगुणा ।

महाबला पीतपुष्पी सहदेवी हरद्रुमा ।
वाट्यायनी देवसहा वाट्या स्यात् पीतपुष्पिका ॥ १७५ ॥

अथ बलाकानामगुणा ।

बलाकातिबला भारद्वाजी स्याद् हृष्यगन्धिनी॥ १७६ ॥

अथ गङ्गेरुकीनामगुणाः ।

गङ्गेरुकी नागबला विश्वदेवा गवेधुका ॥ १७७ ॥

अथ बलाचतुष्टयगुणाः ।

बलाचतुष्टयं शीतं मधुरं बलकान्तिकृत् ।
स्निग्धं ग्राहि समीरास्रपित्तास्रचतनाशनम् ॥ १७८ ॥
श्वासी हृद्दला सक्षू हन्ति वातानुलोमनी ।
गुर्वी नागबला हृद्या विशेषाद्रक्तपित्तजित् ।
बल्या रसायनी पुंस्त्ववर्द्धिनी बृंहणी तथा ॥ १७९ ॥
तस्याः फलं हिमं स्वादु स्तम्भनं गुरुलेखनम् ।
विबन्धाध्मानजननं रक्तपित्तविवर्द्धनम् ॥ १८० ॥

अथ ज्योतिष्मतीनामगुणाः ।

ज्योतिष्मती वह्निरुचि कङ्गुणी कटभी तथा ॥ १८१ ॥
ज्योतिष्मती कटुस्तिक्ता सरा कफसमीरजित् ।
अत्युष्णा वामनी तीक्ष्णा वह्निबुद्धिस्मृतिप्रदा ॥ १८२ ॥

अथ महाज्योतिष्मतीनामगुणाः ।

तेजस्विनी तेजोवती तेजिन्या लघुवल्कला ।
महौजसी पारिजाता शीता सिताऽतितेजिनी ॥ १८३ ॥
तेजस्विनी कफश्वासकासशूलामवातजित् ।
पाचन्युष्णा कटुस्तिक्ता रुचिवह्निप्रदीपनी ॥ १८४ ॥

अथ देवदारुनामगुणाः ।

देवदारु सुराह्वं स्याद्भद्रदारु सुरद्रुमः ।
भद्रकाष्ठं स्नेहवृक्षः क्रमिलं शक्रदारु च ॥ १८५ ॥
देवदारु कटु स्निग्धं तिक्तोष्णं लघु नाशयेत् ।
आध्मानज्वरशोथामहिक्काकण्डुकफानिलान् ॥ १८६ ॥

अथ सरलनामगुणाः ।

सरलो मन्दनो व्रीडा नमेरुहिकहृचका ।

पीतदारु पीतद्रुश्चो महादीर्घकलिद्रुमा॥ १८७॥
सरलः कटुकः पाकरसयोर्मधुरो लघुः।
उष्णा स्निग्धा समीराक्षिकण्ठकर्णामयापहा॥ १८८॥

अथ पुष्करमूलनामगुणाः।

पौष्कराह्वं पद्मपत्रं पौष्करं पुष्कराह्वयम्।
काश्मीरं पुष्करजटा मूलवीरं सुगन्धिकम्॥ १८९॥
पौष्करं कटुकं तिक्तमुष्णवातकफज्वरान्।
हन्ति शोफारुचिश्वासान् विशेषात् पार्श्वशूलजित्॥१९०॥

अथ कुष्ठनामगुणाः।

कुष्ठं रोगाह्वयं दिव्यं कौबेरं पारिभद्रकम्।
पारिभाव्यं पारिभाव्यमुत्पलं पारिभव्यकम्॥ १९१॥
कुष्ठमुष्णं कटु स्वादु तिक्तं शुक्रप्रदं लघु।
हन्ति वाताग्रवीसर्पकुष्ठकासमरुत्कफान्॥ १९२॥

अथ कर्कटशृङ्गीनामगुणाः।

शृङ्गी कुलीरशृङ्गी स्याद्वक्रा कर्कटशृङ्गिका।
कर्कटाख्या महाघोषा शृङ्गनाम्नी नताङ्ग्यपि॥ १९३॥
शृङ्गी कषायतिक्तोष्णा हन्ति हिक्कावमिज्वरान्।
तृष्णा वमिकफश्वासक्षयकासोर्द्ध्वमारुतान्॥ १९४॥

अथ कट्फलनामगुणाः।

कट्फलं कुमुदा कुम्भी श्रीपर्णी सोमपादपः।
सोमवल्को महाकुम्भी भद्रा भद्रवती शिवा॥ १९५॥
कट्फलं तुवरं तिक्तं कटुवातकफज्वरान्।
हन्ति श्वासप्रमेहार्शः कासकण्ठामयारुचीः॥ १९६॥

अथ रोहिषनामगुणाः।

रोहिषं कत्तृणं भूतिर्भूतिकं सरलं तृणम्।
श्यामलं युग्मकं पौरं व्यापकं देवगन्धकम्॥ १९७॥

रोहिषं कटुकं पाके तिक्तोष्णं तुवरं जयेत्।
हन्ति मारुतपित्तास्रं व्रणाच्छ्वासकफज्वरान्॥ १९८॥

अथ भार्गीनामगुणाः।

भार्गी भृगुभवा पद्मा कासघ्नी गन्धपर्णिनी।
खरशाकं शक्रमाता फञ्जी ब्राह्मणयष्टिका॥ १९९॥
भार्गी रूक्षा कटुस्तिक्ता रुच्योष्णा पाचनी ज्वरेत्।
शोथकासकफश्वासपीनसज्वरमारुतान्॥ २००॥

अथ पाषाणभेदनामगुणाः।

पाषाणभेदः पाषाणोऽश्मरीभेदोऽश्मभेदकः।
शिलाभेदो ह्युपलभेदी नागभिच्चाश्मभेदनः॥ २०१॥
पाषाणभेदस्तुवरः शीतलो वस्तिशोधनः।
सरस्तिक्तः प्रमेहार्शःकृच्छ्राश्मरीरुजो जयेत्॥ २०२॥

अथ मुस्तानामगुणाः।

मुस्तं वारिधरो मुस्तो मेघाख्यः कुरुविन्दकः॥ २०३॥
वराहोऽब्दो घनो भद्रमुस्तं राजकसेरुकः।
पिण्डमुस्तं विषध्वंसी नागरोऽब्धः प्रकीर्तितः॥ २०४॥
मुस्तं कटु हिमं ग्राहि तिक्तं दीपनपाचनम्।
कषायं कृमिपित्तासृक्कफतृष्णाज्वरापहम्॥ २०५॥

अथ धातुकीनामगुणाः।

धातुकी कुञ्जरा सिन्धुपुष्पी प्रमदिनी मदा।
पार्वतीया ताम्रपुष्पी सुभिक्षा मद्यवासिनी॥ २०६॥
धातकी कटुका शीता मन्दोष्णा तुवरा लघुः।
तृष्णातीसारपित्तास्रविषकृमिविसर्पजित्॥ २०७॥

अथ माचिकानामगुणाः।

माचिका मालिकाम्बष्ठा शठी दन्तशठाम्बिका।
अम्बष्ठकी सूचीमुखी कषाया कण्ठमुख्यपि॥ २०८॥

माचिकाख्या रसे पाके कषायो शीतलो लघुः ।
पक्षातीसारपित्तास्रकफकण्ठामयापहा ॥ २०९ ॥

अथ विदारिकन्दद्वयनामगुणाः ।

विदारिका वृष्यवल्ली वृष्यकन्दा विदालिका ।
शृगालिका कन्दवल्ली स्वादुकन्दा बिडालिका ॥२१०॥
अन्या शुक्ला चीरशुक्ला चारवल्ली पयस्विनी ।
इक्षुवल्ली महाश्वेता चीरकन्देक्षुगन्धिका ॥ २११ ॥
विदारी मधुरा स्निग्धा बृंहणी स्तन्यशुक्रदा ।
गुरुपित्तास्रपवनदाहान् हन्ति रसायनी ॥ २१२ ॥

अथ वाराहीकन्दनामगुणाः ।

वाराही माधवी गृष्टिः सौकरी वनमालिका ।
विष्वक्सेनप्रिया क्रोड़नाम्ना शम्बरकन्दकः ॥ २१३ ॥
वाराही मधुरा कन्दे कटुस्तिक्तातिशुक्रला ।
बल्या शुक्रकरा वातकफमेहक्रमीन् जयेत् ॥ २१४ ॥

अथ पाठानामगुणाः ।

पाठाम्बष्ठा वृहत्तिक्ता प्राचीनाम्बष्ठिका रसा ।
वरा तिक्ता पापचेली श्रेयसी वृद्धकर्णिका ॥ २१५ ॥
पाठोष्णाकटुका तीक्ष्णा वातघ्नेश्मसहरा लघुः ।
हन्ति शूलज्वरच्छर्दिकुष्ठातीसारहृद्रुजः ।
दाहकण्डूविषश्वासकृमिगुल्मगरव्रणान् ॥ २१६ ॥

अथ मोरटीनामगुणाः ।

मूर्वा देवी मधुरसा देवश्रेणी मधुस्रवा ।
चिम्धपर्णी पृथक्पर्णी मोरटी पीलुपर्णिका ॥ २१७ ॥

अथ मञ्जिष्ठानामगुणाः ।

मञ्जिष्ठा विजया रक्ता रक्ताङ्गी कालमेषिका ।
रक्तयष्टी ताम्रवल्ली समङ्गा वस्त्रभूषणा ॥ २१८ ॥

यञ्ज ला विकर्षा भण्डी कविका ज्वरनाशिनी ।
मञ्जिष्ठा मधुरा तिक्ता कषाया स्वरवर्णकृत् ॥ २१९ ॥
गुरुरुष्णा विषश्लेष्मशोथयोन्यक्षिशूलनुत् ।
रक्तातीसारकुष्ठास्रवीसर्पव्रणमेहजित् ।
तच्छाकं दीपनं स्वादु स्निग्धं पित्तानिलापहम् ॥ २२० ॥

॥ ११९ ॥ अथ हरिद्रानामगुणाः ।

हरिद्रा रजनी गौरी रञ्जिनी वरवर्णिनी ।
पिण्डा पीता वर्णवती निशावर्णा विलासिनी ॥ २२१ ॥
हरिद्रा कटुका तिक्ता रूक्षोष्णा श्लेष्मपित्तनुत् ।
वर्ण्या त्वग्दोषमेहास्रशोथपाण्डुव्रणापहा ॥ २२२ ॥

अथ दारुहरिद्रापीतदारुनामगुणाः ।

दार्वी दारुहरिद्राऽन्या पीतदारु च पचथा ।
कटं कटेरी पित्तद्रु. सर्ववर्णा कटङ्कटी ॥ २२३ ॥
दार्वी तद्वद्विशेषात्तु नेत्रकर्णास्यरोगनुत् ॥ २२४ ॥

॥ अथ प्रपुन्नाटनामगुणाः ।

प्रपुन्नाटस्त्वेडगजश्चक्रमर्दः प्रपुन्नडः ।
दद्रुघ्नो मर्दको मेषकुसुमः कुष्ठकृन्तनः ॥ २२५ ॥
प्रपुन्नाटो लघुः स्वादुः रूक्षः पित्तानिलापहः ।
हृद्यो हिमकफश्वासकुष्ठदद्रुकृमीन् जयेत् ॥ २२६ ॥
हन्त्युष्णं तत्फलं कुष्ठकण्डूदद्रुविषानिलान् ।
वातरक्तापहरास्या शाकं कफकरं लघु ॥ २२७ ॥

अथ बाकुचीनामगुणाः ।

बाकुची चन्द्रिका सोमवल्ली पूतिफला वरा ।
सोमराजी कृष्णफला वल्गुजा कालमेषिका ।
चन्द्रलेखा तथा सोम. कुष्ठघ्नी च सितावरी ॥ २२८ ॥
बाकुची मधुरा तिक्ता कटुपाका रसायनी ।

विष्टम्भघ्नी हिमा रुच्या सरा छर्द्यास्रपित्तनुत् ॥ २२९ ॥
रूक्षा हन्तिकफश्वासकुष्ठमेहज्वरकृमीन् ।
तत्फलं पित्तकृत् केश्यं कुष्ठवातकफापहम् ॥ २३० ॥

अथ भृङ्गराजनामगुणाः ।

भृङ्गराजो भेकराजो मार्कवः केशरञ्जकः ।
भृङ्गारको भृङ्गराजो भृङ्गाह्वः सूर्यवल्लभः ॥ २३१ ॥
भृङ्गराजः कटुस्तिक्तो रूक्षोष्णः कफवातकृत् ।
दन्त्यो रसायनस्त्वच्यः कुष्ठनेत्रशिरोऽर्त्तिजित् ॥ २३२ ॥

अथ पर्पटनामगुणाः ।

पर्पटः कवचो रेणुः पित्तघ्नो वरकपटकः ।
वरतिक्तः पर्पटकः कृष्णिकचर्मकण्टकः ॥ २३३ ॥
पर्पटो हन्ति पित्तासृग्भ्रमतृष्णाकफज्वरान् ।
संग्राही शीतलस्तिक्तो दाहनुत् वातलो लघुः ॥२३४॥
रक्तपुष्पोऽतिसारस्य वारको ज्वरनाशनः ।
पर्पट पित्तहृद्दाहज्वरजित् सं पयोपगः ।
तिक्तशीतौ ज्वरहरौ लघू भूनिम्बपर्पटौ ॥ २३५ ॥

अथ त्रायमाणानामगुणाः ।

शणपुष्पी माल्यपुष्पी धावनी शणघण्टिका ।
बृहत्पुष्पी स्वल्पघण्टा घण्टामन्द्रा तु पुष्पिका ॥ २३६ ॥
शणपुष्पी कटुः पित्तघ्नी अनिलच्छर्दिकारिणी ।
त्रायमाणा सुहृच्छाया त्रायन्ती गिरिजानुजा ।
बलभद्रा कृतत्राणा वार्षिकं त्रायमाणिका ॥ २३७ ॥
त्रायमाणा सरा पित्तज्वरश्लेष्मासृग्शूलजित् ॥ २३८ ॥

अथ महाज्वालनिकानामगुणाः ।

महाज्वालनिका धर्मरङ्गः स्यात् तिम्नपुष्पिका ।
आयतांकी हिन्दुकिनी विभाण्डी रक्तपुष्पिका ॥ २३९ ॥

महाजालनिका तिक्ता रेचनी कफपित्तजित्।
हन्ति दाहोदरानाहशोफकुष्ठक्रिमिज्वरान् ॥२४०॥

अथ अतिविषाभेदनामगुणाः ।

अतिविषा शुक्लकन्दा विषा प्रतिविषापरा।
श्यामकन्दा शिवाशृङ्गी भङ्गुरोषविषाणिका ॥२४१॥
विषोष्णा पाचनी तिक्ता श्लेषपित्तातिसारजित् ॥२४२॥
श्यामकन्दा चोपविषा सा विज्ञेया चतुर्विधा।
रक्ता श्वेता भवेत् कृष्णा पीतवर्णा तथैव च ॥२४३॥
यथापूर्वंवद्विज्ञेया वन्ध्या ज्येष्ठा गुणोत्तमा।
सर्वदोषहराऽप्रास्वालेपात् श्वयथुनाशिनी।
श्लेषजान् विंशतिरोगान् सद्यो हन्याद्रसायनी ॥२४४॥

अथ काकमाचीनामगुणाः ।

काकमाची ध्वाङ्क्षमाची वायसी च घनाघना।
रसायनवरा सर्वतिक्ता स्यात् काकिनी कटु ॥२४५॥
काकमाची त्रिदोषघ्नी स्निग्धोष्णा स्वरशुक्रदा।
हृद्या रसायनी शोफकुष्ठार्शोज्वरमेहजित् ॥२४६॥

अथ काकजङ्घानामगुणाः ।

काकजङ्घा नदीकान्ता काकतिक्ता सुलोमशा।
पारावतपदी काका मदाख्या छर्दिकारिणी ॥२४७॥
काकजङ्घा हिमा हन्ति रक्तपित्तकफज्वरान् ॥२४८॥

अथ लोध्रद्वयनामगुणाः ।

लोध्रस्तिरीट कानीनस्तिल्वक मन्ततोद्भव ।
अन्यो धनत्वात् मरक श्वेतलोध्रोऽस्थिभेषजम् ॥२४९॥
लोध्रो विरेचक शीतचक्षुष्य कफपित्तनुत्।
कषायो रक्तशोफाघ्नश्च्वरातीसारनाशन ।
तत्पुष्पं मधुरं ग्राहि सतिक्तं श्लेषपित्तजित् ॥२५०॥

अथ वृद्धदारुकनामगुणाः ।

वृद्धदारुर्महाश्यामा लाङ्गलो जीर्णवल्कलः ।
अन्धा कोटरपुष्पी स्यादावेगी छागलान्त्रिका ॥२५१॥
वृद्धदारुः कषायोष्णः सरस्तिक्तो रसायनः ।
वृष्यो वातामवातास्रशोफमेहकफान् जयेत् ॥२५२॥

अथ देवदालीनामगुणाः ।

देवदाली वृत्तकोशी देवताडो गरागरी ।
जीमूतस्तारका वेणी जालिन्याऽऽखुविषापहा ॥२५३॥
देवदाली रसे तिक्ता कफार्शःशोफपाण्डुताः ।
नाशयेद् वामनी तीक्ष्णा क्षयहिक्काक्रिमिज्वरान् ।
देवदाली च कटुका प्रमेहश्वासमलापहा ॥२५४॥

अथ हंसपादीनामगुणाः ।

हंसपादी हंसपदी रक्तपादी त्रिपादिका ।
प्रह्लादिनी कीटमारी कीटमाता मधुस्रवा ॥२५५॥
हंसपादी गुरुः शीता हन्ति रक्तविषव्रणान् ।
विसर्पदाहातीसारलूताभूताग्निरोहिणीः ॥२५६॥

अथ सोमवल्लीनामगुणाः ।

सोमवल्ली यज्ञनेता सोमक्षीरी द्विजप्रिया ॥२५७॥
सोमवल्ली त्रिदोषघ्नी कटुस्तिक्ता रसायनी ॥२५८॥

अथ आकाशवल्लीनामगुणाः ।

आकाशवल्ली तु बुधैः कथितामरवल्लरी ॥२५९॥
खवल्ली ग्राहिणी तिक्ता पिच्छिलाक्ष्यामयापहा ॥२६०॥

अथ नाकुलीनामगुणाः ।

नाकुली सम्रहासर्पगन्धिनी गन्धनाकुली ।
नकुलेष्टा महासर्पनेत्रा रोचकपत्रिका ॥२६१॥
नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत् ।

विषं लूताहृश्चिकाखुसर्पाणाञ्च क्रिमिव्रणान् ॥२६२॥

अथ वटपत्रीनामगुणाः ।

वटपत्री मोहिनी स्यादोपत्री रेचनी मता ।
वटपत्री योनिगदान् कषायोष्णा विनाशयेत् ॥२६३॥
तत्फलं स्तम्भनं शीतं वातलं कफपित्तजित् ॥२६४॥

अथ लज्जालुनामगुणाः ।

लज्जालुर्मोहिनी स्पृक्का खदिरो गन्धकारिणी ।
नमस्कारो शमीपत्री समङ्गा रक्तपादिका ॥२६५॥
लज्जालुः शीतला तिक्ता कषाया श्लेष्मपित्तजित् ।
रक्तपित्तमतीसारं योनिरोगान् विनाशयेत् ॥२६६॥

अथ मुसलीनामगुणाः ।

मुसली खलिनो तालपत्री काञ्चनपुष्पिका ।
महावृष्या वृषकन्दः खर्जूरी ताम्रमूलिका ॥२६७॥
मुसली मधुरा वृष्या वीर्योष्णा बृंहणी गुरुः ।
तिक्ता रसायनी हन्ति गुदजामनिलांस्तथा ॥२६८॥

अथ कपिकच्छूनामगुणाः ।

कपिकच्छूः स्वयंगुप्ता कण्डूला दुरवग्रहा ।
चण्डालगुप्ता लाङ्गूली मर्कटी स्यात् प्रहर्षणी ॥२६९॥
कपिकच्छूः परं वृष्या मधुरा बृंहणी गुरुः ।
तद्बीजं वातशमनं वाजीकरणमुत्तमम् ॥२७०॥

अथ पुत्रजीवनामगुणाः ।

पुत्रजीवो गर्भकरो यष्टीपुत्रोऽर्थसाधनः ।
पुत्रजीवो गुरुर्वृष्यो गर्भदः श्लेष्मवातजित् ॥२७१॥

अथ वन्ध्याकर्कोटकीनामगुणाः ।

वन्ध्याकर्कोटकी देवी कुमारी विषनाशिनी ।
मनोज्ञा नागदमनी वन्ध्या योगेश्वरी मता ॥२७२॥

वन्ध्याकर्कोटकी लघ्वी कफनुद् व्रणशोधनी ।
सर्पदंष्ट्रहरा तीक्ष्णा विसर्पविषनाशिनी ॥२७३॥

अथ विष्णुक्रान्तानामगुणाः ।

विष्णुक्रान्ता नीलपुष्पी जया वश्यापराजिता ॥२७४॥
विष्णुक्रान्ता कटुर्मेध्या क्रिमिव्रणकफान् जयेत् ॥२७५॥

अथ शङ्खपुष्पीनामगुणाः ।

शङ्खपुष्पी शङ्खनाम्नी किरीटी कम्बुमालिनी ॥२७६॥
शङ्खपुष्पी सरा मेध्या हृद्या मानसरोगहृत् ।
रसायनी कषायोष्णा स्मृतिकान्तिबलाग्निदा ।
दोषापस्मारभूतासक्कुष्ठक्रिमिविषप्रणुत् ॥२७७॥

अथ दुग्धिकानामगुणाः ।

दुग्धिका मधुपर्णी स्यात् क्षीरिणी स्वादुपुष्पिका ॥२७८॥
दुग्धिकोष्णा गुरू रूक्षा वातला गर्भकारिणी ।
स्वादुर्विष्टम्भिनी हृद्या कफकुष्ठक्रमीन् जयेत् ॥२७९॥

अथ अर्कपुष्पीनामगुणाः ।

अर्कपुष्पी क्रूरकर्मा जलकामा भिरिण्टिका ॥२८०॥
अर्कपुष्पी क्रिमिघ्नी प्रमेहपित्तविकारजित् ॥२८१॥

अथ भल्लातकनामगुणाः ।

भल्लातको नभोवह्नी वीरवृक्षोऽग्निवक्त्रकः ।
आरुष्करस्तथा रूक्षस्तपनोऽग्निमुखो धनुः ॥२८२॥
भल्लातकः कषायोष्णः शुक्रलो मधुरो लघुः ।
वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान् ।
हन्ति गुल्मज्वरश्वित्रवह्निमान्द्यक्रिमिव्रणान् ॥२८३॥

अथ चरपोटानामगुणाः ।

चरपोटा दीर्घपत्री कुन्तली तिक्तका मता ॥२८४॥
चरपोटा हिमा रूक्षा भेदिनी श्वासकासजित् ॥२८५॥

अथ द्रोणपुष्पीनामगुणाः।

द्रोणपुष्पी श्वसनकः पालिन्दी कुम्भयोनिका।
छत्राणी छत्रको द्रोणा कौडिन्यो हृचसारकः ॥२८६॥
द्रोणपुष्पी गुरू रूक्षा स्वादूष्णा वातपित्तनुत्।
भेदिनी कामलाशोफकफक्रिमिहरा कटुः ॥२८७॥

अथ ब्राह्मीब्राह्ममण्डूकीनामगुणाः।

ब्राह्मी सरस्वती सोमा सत्याह्वा ब्रह्मचारिणी।
मण्डूकपर्णी माण्डूकी त्वष्ट्री दिव्या महौषधी।
कपोतवेगा सुनिका लावण्या सोमवल्लरी ॥२८८॥
ब्राह्मी हिमा सरा स्वादुर्लघुर्मेध्या रसायनी।
स्वर्या स्मृतिप्रदा कुष्ठपाण्डुमेहास्रकासजित्।
विषशोफज्वरहरा तद्वत् मण्डूकपर्णिनी ॥२८९॥

अथ सुवर्चलाब्रह्मसुवर्चलानामगुणाः।

सुवर्चलाऽर्ककान्ता स्यात् सूर्य्यभक्ता सुखोद्भवा।
सूर्य्यावर्त्ता रविप्रीता त्वन्या ब्रह्मसुवर्चला ॥२९०॥
सुवर्चला गुरु शीता मूत्रला कफवातजित्।
अन्योक्ता कुष्ठमेहास्रकृच्छ्रज्वरहरा लघुः ॥२९१॥

अथ मत्स्याक्षीनामगुणाः।

मत्स्याक्षी वाह्लिका मत्स्यगन्धी मत्स्यादनी तथा।
मत्स्याक्षी ग्राहिणी शीता कुष्ठपित्तकफास्रनुत् ॥२९२॥

अथ जलपिप्पलीनामगुणाः।

जलपिप्पल्यम्बुवल्ली पम्पूर· कश्चटस्तथा ॥२९३॥
जलपिप्पलिका हृद्या चक्षुष्या शुक्रला लघुः।
संग्राहिणी हिमा रूक्षा रक्तदाहव्रणापहा ॥२९४॥

अथ गोजिह्वानामगुणाः।

गोजिह्वा गोजिका गोभी दार्विका खरपर्णिनी ॥२९५॥

गोजिह्वा वातला शीता ग्राहिणी कफपित्तनुत्।
हृद्या प्रमेहकासास्रव्रणज्वरहरा लघुः ॥२८६॥

अथ नागदमनीनामगुणाः।

नागाह्वादमनी नागगन्धा भुजगपर्णिनी ॥२८७॥
स्यान्नागदमनी वर्ण्या लूतासर्पविषापहा ॥२८८॥

अथ गुञ्जाद्वयनामगुणाः।

गुञ्जा शिखण्डिनी ताम्रा रक्तिका काकनासिका।
श्वेतान्या चक्रिका चूडा दुर्मुखा काकपीलुका ॥२८९॥
गुञ्जा केश्या बलकरा त्वच्या पित्तकफापहा।
नेत्रामयहरा वृष्या हन्ति कण्डूग्रहव्रणान्।
क्रिमीन् प्रलुप्तकुष्ठानि तद्वच्छ्वेतापि शस्यते ॥३००॥

अथ वेल्लन्तरनामगुणाः।

वेल्लन्तरो दीर्घपत्रो वीरद्रुर्बहुवारकः ॥३०१॥
वेल्लन्तरोऽश्मनुद् ग्राही कफकृच्छ्रानिलार्त्तिजित् ॥३०२॥

अथ वन्दाकनामगुणाः।

वन्दाकः स्यादृक्षरुहा शेखरी कामवृक्षकः।
वृक्षादनी कामतरु कामिनी पदरोहिणी ॥३०३॥
वन्दाकः कफवातास्रशोफव्रणविषापहः ॥३०४॥

अथ पिण्डारनामगुणाः।

पिण्डारः करहाटः स्यात् तीक्ष्णकोलः कुरङ्गकः ॥३०५॥
पिण्डारो मधुरः शीतः शोथपित्तकफापहः ॥३०६॥

अथ छिक्किकानामगुणाः।

छिक्किका क्षवकः क्रूरो नासासंवेदना पटुः ॥३०७॥
छिक्किका पित्तला कुष्ठक्रिमिवातकफापहा ॥३०८॥

अथ रोहितनामगुणाः।

रोहितो दाड़िमीपुष्पो रोहितः कूटशाल्मलिः।

भ्रीहारी रोहिणी रोही रक्तघ्न. पारिजातक. ॥३०९॥
रोहितक सरो गुल्मयकृत्प्लीहोदरापह. ॥३१०॥

अथ मोचरसनामगुणा ।

मोचक' स्यान्मोचरस. शाल्मलीवेष्टक: स्मृत. ।
मोचनिर्यासक: पिच्छा मोचास्रावो च वेष्टक ॥३११॥
मोचक शीतलो ग्राही गुरुष्यो ऽतिसारजित् ।
प्रवाहकासपित्तास्रकफदाहनिवर्हण. ॥३१२॥

अथ अजगन्धानामगुणा ।

अजगन्धा वस्तगन्धा कवरी पूतवर्वर: ॥३१३॥
अजगन्धा लघू रुच्या हृद्या तु कफवातनुत् ॥३१४॥

अथ सौरेयकनामगुणा. ।

सौरेयक सहचर' सैरेय किङ्किरातक ।
दासी सहचर: झिण्टी शैर्यको मदुकण्टक ॥३१५॥
रक्तपुष्प कुरबक. पीतो प्रेय कुरण्टक: ।
नील आर्त्तगल ओण्ठो बाण चोदनपाव्यपि ॥३१६॥
सौरेय कुष्ठवातास्रकफकण्डूविपापह ।
तिक्तोष्णो मधुरोऽनम्ल सुस्निग्ध केशरञ्जन ॥३१७॥

अथ नीलश्वेतस्यन्दाद्ययनामगुणा ।

श्वेतस्यन्दा श्वेतपुष्पा कटभिर्गिरिकर्णिका ।
सितापराजिता श्वेता विषघ्नी मेहनाशिनी ।
नीलस्यन्दा व्यक्तगन्धा नीलपुष्पा गवादनी ॥३१८॥
श्वेतस्यन्दाद्वयं शीत ग्रहघ्न दृष्टिकुष्ठनुत् ।
कुष्ठशूलविदोषामशोफव्रणविषापहम् ॥३१९॥

अथ दस्तुरनामगुणा ।

धत्तूर' सुरभिमाण्ड: कोकिलाश्च सुर स्मृत ।
तैलकण्डस्तिचरिपुर्मातुलिका चेक्षुगन्धिका ॥३२०॥

ह्रस्वुरः शीतलो ह्यो गुरुर्वातकफास्रजित् ॥३२१॥

अथ कार्पासनामगुणाः ।

कार्पासः पटमूलच्छादवनोवादरः पिचुः ॥३२२॥
कर्पासको लघुः कोष्णो मधुरो वातनाशनः ।
तद्बीजं स्तन्यदं ह्यं स्निग्धं कफहरं गुरु ॥३२३॥

अथ आरामशीतलानामगुणाः ।

आरामशीतला देवी गन्धा कुक्कुरमर्दनः ॥३२४॥
आरामशीतला शीता कटुः पित्तकफास्रजित् ॥३२५॥

अथ कुक्कुरद्रुनामगुणाः ।

कुक्कुरद्रुस्ताम्रचूडः सूक्ष्मपत्रो मृदुच्छदः ॥३२६॥
कुक्कुरद्रुः कटुस्तिक्तो ज्वररक्तकफापहः ॥३२७॥

अथ वाभीनामगुणाः ।

वाभी शङ्खधरा वारि ब्राह्मी च छिलमोचिका ॥३२८॥
वाभी शोफहरा कुष्ठपित्तश्लेष्मानिलापहा ॥३२९॥

अथ शरपुङ्खानामगुणाः

शरपुङ्खा कालशाकं प्लीहारि कालको मतः ॥३३०॥
शरपुङ्खा यकृत्प्लीहदुष्टव्रणविषापहा ।
तिक्ता कषाया कासास्रश्वासज्वरहरा लघुः ॥३३१॥

अथ बलामोटानामगुणाः ।

बलामोटा जया सूक्ष्मपत्रा ज्ञेयापराजिता ॥३३२॥
बलामोटा विषघ्ने पक्षकृत्नुदिजयप्रदा ॥३३३॥

अथ सुदर्शनानामगुणाः ।

सुदर्शना सोमवल्ली चक्राह्वा मधुपर्णिका ॥३३४॥
सुदर्शना स्वादुरुष्णा कफशोफास्रवातजित् ॥३३५॥

अथ मयूरशिखानामगुणाः

मयराङ्घ्रिशिखा ज्ञेया सहस्री मधुकच्छदा ॥३३६॥

मयूराङ्गशिखा लघ्वी पित्तश्लेष्मातिसारजित् ॥२३७॥

अथ लक्ष्मणानामगुणाः ।

लक्ष्मणा पुत्रदा रक्ता विन्दुपत्रा च नागिनी ।
गोचोरसदृशं पुष्पं रोमवल्लि समन्वितम् ।
रक्तविन्दुसमं पुष्पं लक्ष्मणाकारमुच्यते ॥२३८॥
लक्ष्मणा गर्भदा शीता सरा हृद्या त्रिदोषनुत् ॥२३९॥

अथ मांसरोहिणीनामगुणाः ।

मांसरोहिण्यतिरुहा वृत्ता चर्मकसा वसा ॥२४०॥
स्यान्मांसरोहिणी हृद्या सरा दोषत्रयापहा ॥२४१॥

अथ अस्थिसंहारकनामगुणाः ।

अस्थिसंहारको वज्रवल्ली क्रौष्टुघण्टिका ।
वज्राङ्गी ग्रन्थिमान् वज्रमोक्ता स्यादस्थिशृङ्खलाः ॥२४२॥
अस्थिसंहारकः शीतो हृद्यो वातहरोऽस्थियुक् ॥२४३॥

अथ अर्कद्वयनामगुणाः ।

अर्कः सूर्याह्वयः चीरी सदापुष्पी विकर्त्तनः ।
मन्दारो वसुकोलर्को राजार्को दीर्घपत्रकः ॥२४४॥
अर्कद्वयं मरुद्वातकुष्ठकण्डूविषव्रणान् ।
निहन्ति प्लीहगुल्मार्शोयकृत् श्लेष्मोदरक्रिमीन् ॥२४५॥

अथ करवीरद्वयनामगुणाः ।

करवीरोऽश्वहा श्वेतपुष्पा स्याच्छतपुष्पकः ।
रक्तपुष्पोऽपरश्चण्डो लगुड करवीरकः ॥२४६॥
करवीरद्वयं नेत्रशोफकुष्ठव्रणापहम् ।
लघूष्णं क्रिमिकण्डूघ्नं भक्षितं विषवन्मतम् ॥२४७॥

अथ धत्तूरनामगुणाः ।

धत्तूरः कितवोः धूर्त्तो देवता मदन. शठः ।
उन्मत्तो मातुलस्तूरो तरकः कनकाह्वयः ॥२४८॥

धत्तूरो मदवर्णाग्निवान्तिकुष्ठज्वरकुष्ठनुत् ।
उष्णो गुरुव्रणश्लेष्मकण्डूक्रिमिविषापहः ॥२४९॥

अथ कलिकारीनामगुणाः ।

कलिकारी वह्निमुखी लाङ्गली गर्भपातिनी ।
विशल्या हलिनी शौरी प्रमाता शुक्रपुष्पिका ॥२५०॥
विद्युज्ज्वालाऽग्निजिह्वा च कथिता पुष्पसौरभा ।
वह्निशिखाऽग्निका ज्ञेया नक्तरन्ध्री च सा स्मृता ॥२५१॥
कलिकारी सरा कुष्ठशोफार्शोव्रणशूलजित् ।
तीक्ष्णोष्णा क्रिमिनुल्लघ्वी पित्तला गर्भपातिनी ॥२५२॥

अथ कुमारीनामगुणाः ।

कुमारी मण्डला माता गृहकन्याऽतिपिच्छला ।
रसायनी कण्टकिनी सवराख्या वनोद्भवा ॥२५३॥
कुमारी भेदिनी शीता यकृत्प्लीहकफज्वरान् ।
निहन्ति ग्रन्थिविस्फोटपित्तरक्तत्वगामयान् ॥२५४॥

अथ भङ्गानामगुणाः ।

भङ्गाङ्गा मातुलानी मोहिनी विजया जया ॥२५५॥
भङ्गा कफहरा तिक्ता ग्राहिणी दीपनी लघुः ।
तीक्ष्णोष्णापित्तलानाहमदकृद्वाऽग्निवर्द्धिनी ॥२५६॥

अथ काञ्चनीनामगुणाः ।

काञ्चनी शोणफलिनी काकायुः काकवल्लरी ॥२५७॥
काञ्चनी भ्रान्तिदा मूर्द्धव्यथादोषत्रयापहा ॥२५८॥

अथ दूर्वाद्वयनामगुणाः ।

दूर्वा शष्पा शीतकरी गोलोमी शतपर्विका ।
चन्या श्वेता श्वेतदण्डा मार्गवी दुर्मतादहा ॥२५९॥
दूर्वा हिमा विसर्पाश्रतृट्पित्तकफदाहजित् ॥२६०॥

अथ गण्डदूर्वानामगुणाः ।

गण्डदूर्वा मत्स्यगन्धा मत्स्याक्षी शकुलादनी ॥३६१॥
गण्डदूर्वा हिमा लोहद्राविणी ग्राहिणी लघुः ।
दाहतृष्णाबलासास्रकुष्ठपित्तज्वरापहा ॥३६२॥

अथ काशनामगुणाः ।

काशः सुकाण्डः काशेक्षुः क्षपोटः क्षेत्रवासरः ।
इक्षारिकेक्षुकाशश्च स चैवेक्षुरसः स्मृतः ॥३६३॥
काशस्तृष्णाश्मदाहास्रपित्तक्षयकरो हिमः ॥३६४॥

अथ कुशनामगुणाः ।

दर्भो बर्हिः कुशस्तीक्ष्णः सूच्यग्रो यज्ञभूषणः ॥३६५॥
दर्भः कृच्छ्राश्मतृट्पित्तबस्तिनुत् कफरक्तजित् ॥३६६॥

अथ मुञ्जनामगुणाः ।

मुञ्जः क्षुरा स्थूलदर्भो बाणाह्वो ब्रह्ममेखलः ॥३६७॥
मुञ्जोऽनुष्णो विसर्पास्रमूत्रवस्त्यक्षिरोगजित् ॥३६८॥

अथ नलनामगुणाः ।

नलोरन्ध्री पुष्पहन्त्युर्दमनोऽनलकः पिटः ॥३६९॥
नलो मूत्रार्त्तिदाहास्रकफपित्तविसर्पजित् ॥३७०॥

अथ वंशनामगुणाः ।

वंशो वेणुः कीचकः स्यात् कर्मारस्त्वचिसारकः ॥३७१॥
वंशः सरो हिमः पित्तकफदाहास्रशोफजित् ।
तत्करीरो गुरुर्भेदी रूक्षलो वातपित्तजित् ।
तथाच भेदकोऽनुष्णः कफघ्नो वातपित्तजित् ॥३७२॥

अथ जवानीनामगुणाः ।

जयानी जवनी तीव्रा तुरुष्का मदकारिणी ॥३७३॥
जयानी जीवनी रूक्षा ग्राहिणी मादिनी गुरुः ॥३७४॥

अथ खसतिलनामगुणाः।

तिलभेदः खसतिलः शुभ्रपुष्पो लसत्फलः ॥३७५॥

हृद्यो बल्यः खसतिलः श्लेष्मलो वातजिद् गुरुः।

वल्कलस्तत्फलोद्भूतो रूक्षो ग्राही विशेषतः ॥३७६॥

अथ अहिफेननामगुणाः।

आफूकस्तद्रसोद्भूतमहिफेनं सफेनकम् ॥३७७॥

आफूकं शोषणं ग्राहि श्लेष्मघ्नं वातपित्तलम् ॥३७८॥

अथ छिलिहिण्टनामगुणाः।

छिलिहिण्टो महामूलः पातालो गरुडाह्वयः ॥३७९॥

छिलिहिण्टः परं हृद्यः श्लेष्मलः पवनापहः ॥३८०॥

यो राज्ञां मुकुटतिलकः कटारमल्ल-
स्तेन श्रीमदननृपेण निर्मितेऽत्र।
ग्रन्थेऽभूद्मदनविनोदनाम्नि पूर्णो
वर्गोऽयं ललितपदाढितोऽभयादिः ॥३८१॥

इति अभयादिप्रथमवर्गः।

---

## अथ शुण्ठ्यादिवर्गः।

श्रीं नद्रविराजितमध्यमनन्तं श्रीरुचिपरं परमपरमेष्टाम्।
श्रीमदनविनिनाथः सदा तं विष्णुपदं त्रिपदं विनिदन्तु ॥१॥

अथ शुण्ठीनामगुणाः।

शुण्ठी विश्वौषधं विश्वं कटुभद्रं कटूत्कटम्।
महौषधं शृङ्गवेरं नागरं विश्वभेषजम् ॥२॥

शुण्ठी रुच्यामवातघ्नी पाचनी कटुका लघुः।
स्निग्धोष्णा मधुरा पाके कफवातविबन्धनुत् ॥३॥

हृद्या रुच्या वमिश्वासकासशूलहृदामयान् ।
हन्ति श्लीपदशोफार्शआनाहोदरमारुतान् ॥४॥

अथ आर्द्रकनामगुणाः ।

कटूष्णं दीपनं हृद्यं रुच्यमार्द्रकनागरम् ।
श्वासकासवमीहिक्कावातघ्नं अविबन्धनुत् ॥५॥
पाचनं रोचनं हृद्यं कटूष्णं वह्निदीपनम् ।
वातप्रकोपशमनं पाचनं शोथहृत् परम् ॥६॥
भोजनादौ सदा पथ्यं जिह्वाकण्ठविशोधनम् ।
मध्यसारसवीर्य्यत्वात् तत्परन्तु कफापहम् ॥७॥
काञ्चिकार्द्रं सलवणं दीपनं पाचनं परम् ।
वातप्रकोपशमनं हर्षणं लवणार्द्रकम् ॥८॥

अन्यदपि ।

आर्द्रकं शृङ्गवेरन्तमहौषधमुदाहृतम् ।
आर्द्रक नागरगुणं भेदनं दीपनं गुरु ॥९॥

अथ मरिचनामगुणाः ।

मरीच वल्लिज तीक्ष्णं मलिनं श्यामभूषणम् ॥१०॥
मरीचं कटुकं तीक्ष्णं दीपन कफवातनुत् ।
उष्णं पित्तकरं रूक्षं श्वासशूलक्रिमीन् जयेत् ॥११
तदार्द्रं मधुर पाके नात्युष्णं कटुक गुरु ।
किञ्चित्तीक्ष्णगुणं श्लेष्मप्रसेकि स्यादपित्तलम् ॥१२॥

अथ पिप्पलीनामगुणाः ।

पिप्पली चपला कृष्णा मागधी मगधा कणा ।
विश्वोपकुल्या वैदेही शौण्डी स्यात्तीक्ष्णतण्डुला ॥१३॥
पिप्पली दीपनी हृद्या स्वादुपाका रसायनी ।
अत्युष्णा कटुका स्निग्धा कफवातहरा लघुः ॥१४॥
पित्तला रेचनी हन्ति श्वासकासोदरज्वरान् ।

कुष्ठप्रमेहगुल्मार्शः प्लीहशूलाममारुतान् ।
आर्द्रा कफप्रदा स्निग्धा शीतला मधुरा गुरुः ॥१५॥

अथ त्रूषणचतुरूषणनामगुणाः ।

विश्वोपकुल्यामरिचैः त्रूषणं कटुकं कटु ।
व्योषं कटुत्रयं तत् स्यात् सग्रन्थि चतुरूषणम् ॥१६॥
त्रूषणं दीपनं हन्ति श्वासकासत्वगामयान् ।
गुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसान् ॥१७॥

अथ पिप्पलीमूलनामगुणाः ।

कणामूलं कटुग्रन्थि पिप्पलीमूलमूषणम् ।
षड्ग्रन्थि ग्रन्थिकं मूलं मागधं चटकाशिरः ॥१८॥
दीपनं पिप्पलीमूलं कटूष्णं पाचनं लघु ।
रूक्षं पित्तकरं भेदि कफवातोदरापहम् ॥१९॥

अथ चव्यतत्फलनामगुणाः ।

चव्यं चपणमुच्छिष्टश्चविका कोलवल्लिका ॥२०॥
पिप्पलीमूलवत् तस्याविशेषाद् गुदजापहम् ।
चव्यगुण्यं गरश्वासकासक्षयविनाशनम् ॥२१॥
तत्फलं श्रेयसी हस्तिमागधी गजपिप्पली ॥२२॥
गजकृष्णा कटुर्वातश्लेष्मनुत् वह्निवर्द्धिनी ।
उष्णा निहन्त्यतीसारं श्वासकण्ठामयक्रिमीन् ॥२३॥

अथ चित्रकनामगुणाः ।

चित्रको हुतभुग् व्यालो दारुणो दहनोऽरुणः ।
अग्निमाली हविःपाची वह्निनामा विशेषतः ॥२४॥
चित्रकः कटुकः पाके वह्निकृत्पाचनो लघुः ।
रूक्षोष्णो ग्रहणीकुष्ठशोफार्शः कृमिकासजित् ।
श्लेष्मानिलहरो ग्राही तच्छाकं श्लेष्मवातनुत् ॥२५॥

अथ पञ्चकोलषड्षणनामगुणाः ।

पिप्पली मागधीमूलचव्यनागरचित्रकैः ।
पञ्चकोलं कफानाहगुल्मशूलारुचीन् जयेत् ॥२६॥
मरिचेनयुतं तत्तु षड्षणमुदाहृतम् ॥२७॥

अथ शतपुष्पादयनामगुणाः ।

शतपुष्पा शतप्रोपा शताह्वा कारवी मिसिः ।
अवाक्पुष्पी त्वचि छत्रा सैनिका मागधीऽपरा ॥२८॥
शतपुष्पा लघुस्तीक्ष्णा पित्तकृद्दीपनी कटुः ।
उष्णा ज्वरानिलश्लेष्मव्रणशूलाक्षिरोगजित् ।
सैनिका तद्गुणा प्रोक्ता विशेषाद् योनिशूलहृत् ॥ २९॥

अथ मिश्रेयानामगुणाः ।

मिश्रेया मिशिमालेयी शालेयी शीतशिवा मता ॥३०॥
मिश्रेया दीपनी हृद्या बद्धविट्क्रिमिशुक्रनुत् ।
रूक्षोष्णा तत्कफ्नं कासवमिश्लेष्मानिलान् जयेत् ॥३१॥

अथ वनमेथीनामगुणाः ।

मेथिका वल्लिका पेलुरहिली वनमेथिका ॥३२॥
अहिलोऽल्पगुणस्ताहृत् वाजिनां स तु पूजितः ॥३३॥

अथ अजमोदानामगुणाः ।

अजमोदाऽप्युग्रगन्धा मोदा हस्ति मयूरकः ।
खराह्वा कारवी दन्तो वस्तमोदा च मर्कटः ॥ ३४ ॥
अजमोदा कटुस्तोष्णा दीपनी कफवातनुत् ।
उष्णा विदाहिनी हृद्या दृष्या बद्धमला लघुः ।
नेत्रामयक्रमिच्छर्दिहिक्कावस्तिरुजो जयेत् ॥३५॥

अथ जीरकत्रितयनामगुणाः ।

जीरकं दीर्घकं शुक्लमजाजी कणजीरकम् ॥३६॥
जीरका जरणं कृष्णं वर्षाकाली सुगन्धिकम् ॥३७॥

कालिका बाष्पिका कुञ्चिः कारवी चोपकुञ्चिका।
पृथ्वीका सुसवी पृथ्वी स्थूलजाज्यु पकालिका ॥३८॥
जीरकत्रितयं रूक्षं कटूष्णं दीपनं लघु।
संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत्।
चक्षुष्यं पवनाध्मानगुल्मच्छर्दिबलासजित् ॥३९॥

अथ यवानीनामगुणाः।

यवानी दीप्यको दीप्यो दीपनीया यवानिका।
यवसाह्वोग्रगन्धा स्यात् यवाह्वा भूकदम्बकः ॥४०॥
यवानी पाचनी रुच्या तीक्ष्णोष्णा कटुका लघुः।
वातश्लेष्मोदरानाहगुल्मशूलक्रिमीन् जयेत् ॥४१॥

अथ यवानिका(खोरासानी)नामगुणाः।

यवानिका यवानी स्यात्खोराणी जन्तुनाशनः ॥४२॥
चौहारस्तत् गुणः प्रोक्तो विशेषात् क्रिमिनाशनः ॥४३॥

अथ अजगन्धानामगुणाः।

अजगन्धा पूतिकोटा बर्बरो पूतिवर्बरः।
कारवी खरपुष्पा च तुङ्गी पूतिमयूरिका ॥४४॥
अजगन्धा कटुस्तीक्ष्णा रूक्षा हृद्याऽग्निवर्द्धनी।
दृष्टिमान्द्यप्रदा लघ्वी शक्रवातकफापहा ॥४५॥

अथ वचानामगुणाः।

वचोग्रगन्धा गोलोमी षड्ग्रन्था जटिला मता।
जटिला शतपर्वाख्या लोमशा हैमवत्यपि ॥४६॥
वचोष्णा कटुका तिक्ता वामनी स्वरवह्निकृत्।
अपस्मारकफोन्मादभूतशूलानिलान् जयेत् ॥४७॥

अथ हपुषानामगुणाः।

हपुषा वपुषा विस्रा विगन्धा विस्रगन्धिका ॥४८॥

हपुषा दीपनी तिक्ता कटूष्णा तुवरा गुरुः ।
पित्तोदरसमीरार्शोग्रहणीशोफगुल्मजित् ॥४९॥

अथ विडङ्गनामगुणाः ।

विडङ्गं जन्तुहननं क्रिमिघ्नं क्षुद्रतण्डुला ।
भूतघ्नी तण्डुला घोषा कराला स्वर्गगामिनी ॥५०॥
विडङ्गं कटु तिक्तोष्णं रूक्षं वह्निकरं लघु ।
गुल्माध्मानोदरश्लेष्मक्रिमिवातविबन्धनुत् ॥५१॥

अथ धान्याकनामगुणाः ।

धान्याकं धान्यकं धान्यं धानेयश्च वितुन्नकम् ।
कुस्तुम्बुरु तदार्द्रं तु धानी धानेयकाश्च ये ॥५२॥
धान्यकं तुवरं स्निग्धमवृष्यं मूत्रलं लघु ।
हृद्यं रूक्षं बद्धविट्कं स्वादु पाके त्रिदोषनुत् ॥५३॥
पाचनं श्वासकासासतृष्णाम्यार्शः क्रिमीन् जयेत् ।
आर्द्रन्तु तद्गुणा स्वादुर्विशेषात्पित्तनाशिनी ॥५४॥

अथ हिङ्गुपत्रीद्वयनामगुणाः ।

हिङ्गुपत्री पृथुस्वाम्बी पृथ्वीका दारुपत्रिका ।
वाष्पिका कारवी तन्वी विस्विका क्षीर्षिका तथा ॥५५॥
हिङ्गुपत्रीऽपरा वेणुपत्री हिङ्गुशिवाटिका ।
जन्तुका रामठी नाडी पिण्डा हिङ्गुफला मता ॥५६॥
हिङ्गुपत्रीद्वयं हृद्यं तीक्ष्णोष्णं पाचनं कटु ।
ब्रध्नवस्तिरुक् विबन्धार्शःश्लेष्मगुल्मानिलापहम् ॥५७॥

अथ हिङ्गुनामगुणाः ।

हिङ्गुवाह्लीकमत्युग्रं रामठं भूतनाशनम् ।
अगूढगन्धा जरणं जन्तुघ्नं सूपधूपनम् ॥५८॥
हिङ्गूष्णं पाचनं रुच्यं तीक्ष्णोष्णं कफवातनुत् ।
शूलगुल्मोदरानाहक्रिमिजित् पित्तवर्द्धनम् ॥५९॥

अथ वंशलोचननामगुणाः।

वंशजा वैणवी चोरी त्वक्चीरी वंशलोचना।
तुगाचीरी तुगावंशी वंशचीरी शुभा सिता ॥६०॥
वंशजा बृंहणी वृष्या शीतला मधुरा जयेत्।
तृष्णाक्षयज्वरश्वासकासपित्तास्रकामलान् ॥६१॥

अथ सैन्धवनामगुणाः।

सैन्धवं सिन्धुजं शुद्धं माणिमन्थं पटूत्तमम् ॥६२॥
सैन्धवं मधुरं हृद्यं दीपनं शीतलं लघु।
चक्षुष्यं पाचनं स्निग्धं हृद्यं दोषत्रयापहम् ॥६३॥

अथ सौवर्चलनामगुणाः।

सौवर्चलं सुगन्ध्याद्यं रुचकं हृद्यगन्धकम् ॥६४॥
सौवर्चलं वह्निकरं कटूष्णं विशदं लघु।
उद्गारशुद्धिदं सूक्ष्मं विबन्धानाहशूलजित् ॥६५॥

अथ विडनामगुणाः।

विडं कृत्रिमकं पाक्यं धूर्त्तं द्राविडमासुरम् ॥६६॥
विडं लघूष्णं विष्टम्भि शूलहृद्रोगवारणोः।
हन्त्यानाहकफौ शूलमधोवातानुलोमनम् ॥६७॥

अथ सामुद्रकनामगुणाः।

सामुद्रं वारिसम्भूतमक्षीवमासुरं तथा ॥६८॥
सामुद्रं दीपनं स्वादु नात्युष्णं भेदनं कटु।
श्लेष्मलं वातनुत् तिक्तमरूक्षं नातिपित्तलम् ॥६९॥

अथ औद्भिदनामगुणाः।

औद्भिदं भूमिजं भौमं पार्थिवं पृथिवीभवम् ॥७०॥
औद्भिदं रक्तलं सूक्ष्मं लघु वातानुलोमनम् ॥७१॥

अथ गडकनामगुणाः।

गडकाख्यं रोमलवणं रोमं शाकम्भरीभवम् ॥७२॥

गण्डाख्यं लघु वातघ्नमत्युष्णं भेदि मूत्रलम् ॥७३॥

अथ क्षारनामगुणाः ।

क्षारं पांशुभवं लौधमौपरं पांशवं वसु ॥७४॥
क्षारं गुरु कटु स्निग्धं श्लेष्मलं वातनाशनम् ॥७५॥

अथ काचलवणनामगुणाः ।

काचं त्रिकूटं पाक्याह्वं लवणं काचसम्भवम् ॥७६॥
काचं दीपनमत्युष्णं रक्तपित्तविवर्द्धनम् ॥७७॥

अथ यवक्षारस्वर्जिकाक्षारनामगुणाः ।

यवक्षारः शूकपाक्यो यवशूको यवाग्रजः ॥७८॥
स्वर्जिका स्वर्जिकापाक्यं सुखपाक्यं सुवर्चिका ॥७९॥
यवक्षारोऽग्निकृत् वातश्लेष्मश्वासगलामयान् ।
पामार्शोग्रहणीगुल्मयकृत्प्लीहरुजो जयेत् ॥८०॥
स्वर्जिकाऽन्यगुणा तस्माद्विशेषात् गुल्मशूलनुत् ॥८१॥

अथ टङ्कणनामगुणाः ।

टङ्कणो मालतीजातो द्रावी लोहविशुद्धिदः ॥८२॥
टङ्कणोऽग्निकरो रूक्षः कफघ्नो वातपित्तजित् ॥८३॥

अथ सुधाक्षार(चूर्ण)नामगुणाः ।

सुधाह्वयं सुधा सौधभूषणं कटुशर्करा ॥८४॥
सुधाक्षारोऽग्निसङ्काशः पाकी क्लेदी विदारणः ॥८५॥

अथ सर्वक्षारनामगुणाः ।

पलाशतिलनालखदष्टकाकदलीभवाः ।
अपामार्गोऽर्कमुण्डामोचकादिसमुद्भवाः ॥८६॥
क्षारा वह्निसमाः सर्वे पाचना भेदिदारणाः ।
लघवः क्लेदिनस्तीक्ष्णाः शुक्रला दृष्टिनाशनाः ॥८७॥
रक्तपित्तकरा घ्नन्ति विबन्धानाहपीनसान् ।
यकृत्प्लीहमलाशामगुल्मार्शोग्रहणीक्रिमीन् ॥८८॥

यो राज्ञां मुकुटतिलकः कटारमल्ल-
स्तेन श्रीमदननृपेण निर्मितेऽत्र ।
यन्थेऽभून्मदविनोदनाम्नि पूर्णः
शुण्ठ्यादिः खलु भिषजां हिताय वर्गः ॥८८॥
इति शुण्ठ्यादि द्वितीयवर्गः ।

---

## अथ कर्पूरादिवर्गः ।

पारीन्द्रो पालो नयनत्रयीभि-
र्वोर्न विनोदात्परिचुम्बितास्यम् ।
श्रोर्हं पिबन्तं प्रतिबद्धदन्त-
मायर्थयुक्तं हरिमाश्रयामि ॥ १ ॥

अथ कर्पूरनामगुणाः ।

कर्पूरः स्फटिकश्चन्द्रः सिताभ्रो हिमवालुकः ।
हिमोपलः शीतरश्मी भूतिकस्तु हिमाह्वयः ।
हिमाह्वो घनसारश्च चन्द्राह्वयापि गीयते ॥ २ ॥
कर्पूरः शीतलो हृद्यस्तृष्णो लेखनो लघुः ।
कफदाहास्यवैरस्यमेदःशोषविषापहः ॥ ३ ॥

अथ कस्तूरिकाद्वयनामगुणाः ।

कस्तूरिका मृगमदो वेधमुख्या मृगाण्डजः ।
मृगनाभिरथाऽन्या स्याल्लताकस्तूरिका मता ॥ ४ ॥
कस्तूरी शुक्रला गुर्वी कटुका कफशीतजित् ।
उष्णा हन्ति विषच्छर्दिशोषदौर्गन्ध्यमारुतान् ॥ ५ ॥
लताकस्तूरिका तद्वत् लघ्वी शीता लघुस्तथा ॥ ६ ॥

अथ मार्जारीनामगुणाः ।

मार्जारी पूतिका पूतिकजा स्याद् गन्धचेलिका ॥ ७ ॥
मार्जारी कान्तिमाधत्ते चक्षुष्या कफवातजित् ॥८॥

अथ श्वेतचन्दननामगुणाः ।

चन्दनं तिलपर्णं स्यान्महार्हं श्वेतचन्दनम् ।
भद्रश्रियं मलयजं गोशीर्षं गन्धसारकम् ॥ ९ ॥
चन्दनं शीतलं रूक्षं तिक्तमाह्लादनं लघु ।
हृद्यं वर्ण्यं विषघ्नं श्लेष्मपित्तास्रदाहजित् ॥ १० ॥

अथ रक्तचन्दननामगुणाः ।

रक्तचन्दनमुद्दिष्टं लोहितं क्षुद्रचन्दनम् ।
ताम्रसारं रक्तसारं ज्योतिःसोमय रञ्जनम् ॥ ११ ॥
रक्तं शीतं गुरु स्वादु छर्दितृष्णास्रपित्तनुत् ।
तिक्तं नेत्रहितं वृष्यं ज्वरव्रणविषापहम् ॥ १२ ॥

अथ पीतचन्दननामगुणाः ।

कालीयकं पीतसारं पीतं नारायणप्रियम् ॥ १३ ॥
कालीयकं रक्तगुणं विशेषात् पवनापहम् ॥ १४ ॥

अथ कृष्णागुरुनामगुणाः ।

कृष्णागुरु स्यादगुरु राजार्हं विश्वरूपकम् ।
जोङ्गकं पीतमलिनं क्रिमिजग्धमनार्थ्यकम् ॥१५॥
कृष्णागुरूष्णं कर्णाक्षिरोगनुत्पित्तलं लघु ॥ १६ ॥

अथ कुङ्कुमनामगुणाः ।

कुङ्कुमं चारु बाह्लीकं वर्णं मग्निशिखं वरम् ।
काश्मीरं पीतमभ्राङ्क सङ्कोच पिशुनारुणम् ॥ १७ ॥
कुङ्कुमं कटुकं स्निग्धं शिरोरुग्व्रणजन्तुजित् ।
उष्णं हास्यकरं वर्ण्यं व्यङ्गदोषत्रयापहम् ॥ १८ ॥

अथ सिह्लकनामगुणाः ।

सिह्लकः कपिजो धूम्रस्तुरुष्कः पिण्डितः कपिः ॥१९॥
सिह्लकः कुष्ठकण्डूघ्नः स्निग्धोष्णः शुक्रकान्तिकृत् ॥२०॥

यो राज्ञां मुकुटतिलकः कटारमल्ल-
स्तेन श्रीमदनन्नृपेण निर्मितेऽस्मिन् ।
ग्रन्थेऽभ्रूमदविनोदनाम्नि पूर्णः
शुण्ठ्यादिः प्रभु भिषजां हिताय वर्गः ॥८८॥
इति शुण्ठ्यादि द्वितीयवर्गः ।

—•—

## अथ कर्पूरादिवर्गः ।

धाराम्भो पाणी नवघनशोभि-
र्दामं विनोदारपरिचुम्बितास्यम् ।
श्रीदं पिबन्तं प्रतिवदद्गल-
मायर्थ्ययुक्तं हरिमाश्रयामि ॥ १ ॥

अथ कर्पूरनामगुणाः ।

कर्पूरः स्फटिकश्चन्द्रः सिताभ्रो हिमवालुकः ।
हिमोपमः शीतरश्मी भूतिकस्तु हिमाह्वयः ।
हिमाह्वो घनसारश्च चन्द्राह्वयापि गीयते ॥ २ ॥
कर्पूरः शीतलो वृष्यश्चक्षुष्यो लेखनो लघुः ।
कफदाहास्यवैरस्यमेदःशोषविषापहः ॥ ३ ॥

अथ कस्तूरिकाद्वयनामगुणाः ।

कस्तूरिका मृगमदो वेधमुख्या मृगाण्डजः ।
मृगनाभिरथाऽन्या स्याल्लताकस्तूरिका मता ॥ ४ ॥
कस्तूरी शुक्रला गुर्वी कटुका कफशीतजित् ।
उष्णा हन्ति विषच्छर्दिशोषदौर्गन्ध्यमारुतान् ॥ ५ ॥
लताकस्तूरिका तद्वद्वृष्या शीता लघुस्तथा ॥ ६ ॥

अथ मार्जारीनामगुणाः ।

मार्जारी पूतिका पूतिकला स्याद् गन्धचेलिका ॥ ७ ॥
मार्जारी कान्तिमाधत्ते चक्षुष्या कफवातजित् ॥८॥

हृल्लासविषवक्त्रास्यशिरोरुग् वमिकासनुत् ॥३५॥

अथ गुडत्वचनामगुणाः।

त्वचं वराङ्गं शकलं त्वग्चोचं तनुकं वरम्।
लटपर्णं घनं भृङ्गं गुडत्वक् स्वर्णभूमिकम् ॥३६॥
त्वचं लघूष्णं कटुकविषदं स्वादु पित्तलम्।
हृद्बस्तिरोगवातार्शःपीनसक्रिमिशुक्रनुत् ॥३७॥

अथ तेजपत्रनामगुणाः।

पत्र दलाह्वं तापसं तमालं रोम रोमशम् ॥३८॥
पत्रमुष्णं लघु श्लेष्मकासार्शोऽनिलापहम् ॥ ३९॥

अथ नागकेशरनामगुणाः।

नागकेशरकं नागं चाम्पेयं केशरद्रुकम् ॥४०॥
नागकेशरकं रूक्षमुष्णं लघ्वामपाचनम्।
दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम् ॥ ४१ ॥

अथ त्रिजातचतुर्जातनामगुणाः।

एलादि त्रिभिरुद्दिष्टं त्रिजातं त्रिसुगन्धिकम् ॥४२॥
चतुर्जातं सनागं तद्दय वातकफापहम् ॥४३॥

अथ तालीसपत्रनामगुणाः।

तालीसपत्रं तालीसं धात्रीपत्रं शुकोदरम्।
अपरं ग्रन्थिकापत्रं पत्राढ्यं तुलसीच्छदम् ॥४४॥
तालीसं लघु तीक्ष्णोष्णं श्वासकासकफानिलान्।
रुच्यं निहन्ति गुल्मामवह्निमान्द्यक्षयामयान् ॥४५॥

अथ सरलनामगुणाः।

सरलो मदनयष्टो नमेरुः पीतवृक्षकः ॥४६॥
सरलः कण्ठकर्णाक्षिगदघ्नोष्णो लघुः कटुः ॥४७॥

अथ श्रीवासनामगुणाः।

श्रीवासो वेष्टको दासो श्रीनिवासः कलिद्रुमः ॥४८॥

अथ एलवालुकनामगुणाः ।

एलवालुकमेल्वालु वालुकं हरिवालुकम् ॥२१॥
एल्वालु शीतलं हन्ति कण्डूकुष्ठकफक्रिमीन् ।
तृट्छर्दिकफपित्तास्रहृम्मूत्रगदजित् लघुः ॥ २२ ॥

अथ जातीफलनामगुणाः ।

जातीफलं जातीकोषं मालकं मालतीसुतम् ॥२३॥
जातीफलं लघु स्वर्यं हृद्यं दीपनपाचनम् ।
उष्णं कफानिलच्छर्दिक्रिमिपीनसकासजित् ॥ २४ ॥

अथ जातीपत्रीनामगुणाः।

जातीपत्री जातीपर्णी मालतीपत्रिका तथा ॥२५॥
जातीपत्री लघूष्णा स्यात् कफक्रिमिविषापहा ॥ २६ ॥

अथ लवङ्गनामगुणाः ।

लवङ्गं शेखरं दिव्यं लवं चन्दनपुष्पकम् ।
श्रीपुष्पं देवकुसुमं भृङ्गारं वारिसम्भवम् ॥ २७ ॥
लवङ्गं लघु चक्षुष्यं हृद्यं दीपनपाचनम् ।
शूलानाहकफश्वासकासच्छर्दिक्षयापहम् ॥ २८ ॥

अथ कङ्कोलनामगुणाः ।

कङ्कोलं कटुकं कोलं मारीचं माधवोचितम् ॥२८॥
कङ्कोलमुष्णं हृद्रोगकफवाताग्निमान्द्यजित् ॥ ३० ॥

अथ सूक्ष्मैलानामगुणाः ।

एला त्रुटिश्चन्द्रबाला बहुला निष्कुटिस्तु षा ।
कपोतवर्णा सूक्ष्मैला कोरङ्गी द्राविड़ी मता ॥३१॥
एला सूक्ष्मा कफश्वासकासार्शोमूत्रकृच्छ्रनुत् ॥ ३२ ॥

अथ स्थूलैलानामगुणाः ।

स्थूलैला त्रिपुटा कन्या भद्रैला त्रिदिवोद्भवा ॥३३॥
स्थूलैला रोचनी तीक्ष्णा लघूष्णा कफपित्तजित् ॥३४॥

हृल्लासविषवक्त्रास्यशिरोरुग् वमिकासनुत् ॥३५॥

अथ गुडत्वचनामगुणाः ।

त्वच वराङ्गं शकलं त्वग्चोचं तनुकं वरम् ।
लटपर्णं घनं भृङ्गं गुडत्वक् स्वर्णभूमिकम् ॥३६॥
त्वचं लघूष्णं कटुकविषदं स्वादु पित्तलम् ।
हृद्वस्तिरोगवाताशःपीनसक्रिमिशुक्रनुत् ॥३७॥

अथ तेजपत्रनामगुणाः ।

पत्रं दलाह्वं तापसं तमालं रोम रोमशम् ॥३८॥
पत्रमुष्णं लघु हृत्कफहृल्लासारुचिशोफानिलापहम् ॥३९॥

अथ नागकेशरनामगुणाः ।

नागकेशरकं नागं चाम्पेयं केशरकं जम् ॥४०॥
नागकेशरकं रूक्षमुष्णं लघ्वामपाचनम् ।
दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम् ॥ ४१ ॥

अथ त्रिजातचतुर्जातनामगुणाः ।

एलादि त्रिभिरुद्दिष्टं त्रिजातं त्रिसुगन्धिकम् ॥४२॥
चतुर्जातं सनागं तद्द्वयं वातकफापहम् ॥४३॥

अथ तालीसपत्रनामगुणाः ।

तालीसपत्रं तालीसं धात्रीपत्रं शुकोदरम् ।
अपरं ग्रन्थिकापत्रं पत्राढ्यं तुलसीच्छदम् ॥४४॥
तालीसं लघु तीक्ष्णोष्णं श्वासकासकफानिलान् ।
हृद्यं निहन्ति गुल्मामवह्निमान्द्यक्षयामयान् ॥४५॥

अथ सरलनामगुणाः ।

सरलो मदनश्चण्डो नमेरुः पीतद्रुमकः ॥४६॥
सरलः कण्ठकर्णाक्षिगदघ्नोष्णो लघुः कटुः ॥४७॥

अथ श्रीवासनामगुणाः ।

श्रीवासो वेटको दासो श्रीनिवासः कलिद्रुम ॥४८॥

ग्रीवासः कफमूर्द्धातिरोगवातहरः सरः ॥४८॥

अथ वालकनामगुणाः

वालकं वारि ह्रीवेरमम्बिन्नमाचमनं कचम्।
उदीच्यं वज्रमन्याङ्गं वर्हिष्ठं गन्धमूलकम् ॥५०॥
वालकं शीतलं रूक्षं लघु दीपनपाचनम्।
रक्तपित्तज्वरश्लेषदाहतृष्णाव्रणापहम् ॥५१॥

अथ जटामांसीद्वयनामगुणाः।

मांसी जटा भूतकेशी क्रव्यादा जलदं शिखा ॥५२॥
कृष्णाऽन्या पूतनाकेशी गन्धमांसी पिशाचिका ॥५३॥
मांसी हिमा त्रिदोषास्रदाहवीसर्पकुष्ठजित् ॥५४॥

अथ उशीरनामगुणाः।

उशीरमभयं सेव्यं वीरं वीरणमूलिका ॥५५॥
उशीरं पाचनं शीतं स्तम्भनं कफपित्तजित्।
तृष्णास्रविषवीसर्पदाहकृच्छ्रव्रणापहम् ॥५६॥

अथ रेणुकानामगुणाः।

रेणुका कपिला कौन्ती पाण्डुपत्री हरेणुका ॥५७॥
रेणुका पित्तला मेध्या वह्निकृत् गर्भपातिनी ॥५८॥

अथ प्रियङ्गुनामगुणाः।

प्रियङ्गु फलिनी श्यामा कान्ताह्वा नन्दिनी लता ॥५९॥
प्रियङ्गुः शीतला दाहपित्तज्वरास्रजित्।
मुखकान्तिप्रजननी गात्रदौर्गन्ध्यनाशनः ॥६०॥

अथ परिपेलनामगुणाः।

परिपेलं प्लवं धन्यं गृधाह्वं परिपेलवम् ॥६१॥
परिपेलं हिमं कण्डुकुष्ठास्रकफपित्तजित् ॥६२॥

अथ शैलेयनामगुणाः।

शैलेयं स्थविरं वृद्धं शिलापुष्पं शिलोद्भवम् ॥६३॥

शैलेयं शीतलं हृद्यं कफपित्तहरं लघु ॥ ६४ ॥

अथ लामज्जकनामगुणाः ।

लामज्जकं जलाधारं दोर्घमूलं जलाशयम् ।
इष्टकापथकं शीघ्रमरणालं सुनालकम् ॥ ६५ ॥
लामज्जकं हिमं कृच्छ्रदाहदोषत्रयास्रजित् ॥ ६६ ॥

अथ कुन्दुरुनामगुणाः ।

कुन्दुरुर्मेघकः कुन्दः गोपुरो भीषणो बली ॥ ६७ ॥
कुन्दुरुः स्वेदपवनघ्नो ग्रहभ्रमज्वरापहः ॥ ६८ ॥

अथ गुग्गुलुनामगुणाः ।

गुग्गुलुः कालनिर्य्यासो महिषाक्षः पलङ्कषः ।
जटायुः कौशिको धूर्त्तो देवधूपः शिवः पुरः ॥ ६९ ॥
गुग्गुलुर्विशदस्तिक्तो वीर्य्योष्णो मधुरः सरः ।
भग्नसन्धानकृद् हृष्यः सूक्ष्मः स्वर्य्यो रसायनः ॥ ७० ॥
दीपनः पिच्छलो बल्यः कफवातव्रणापचीः ।
मेदोमेहाश्मवातांश्च क्लेदकुष्ठाममारुतान् ॥ ७१ ॥
पिडकाग्रन्थिशोफार्शोगण्डमालाक्रिमीन् जयेत् ।
स नवो बृंहणो हृष्यः पुराणस्त्वतिलेखनः ॥ ७२ ॥

अथ रालानामगुणाः ।

राला सर्जरसो यक्षधूपसर्जोऽग्निवल्लभः ।
ललनः सालनिर्य्यासो कलः कललजश्च सः ॥ ७३ ॥
राला हिमा गुरुस्तिक्ता कषाया ग्राहिणी जयेत् ।
दोषास्रस्वेदवीसर्पविषव्रणविपादिकाः ॥ ७४ ॥

अथ स्थौणेयकनामगुणाः ।

स्थौणेयकं बर्हिपुष्पं शुकवर्हं शुकच्छदम् ॥ ७५ ॥
स्थौणेयं शीतलं हृद्यं मेध्यं दोषत्रयास्रजित् ॥ ७६ ॥

अथ चोरकनामगुणाः।

चोरकः कितवश्चण्डा दुष्पत्रः शङ्कितो रिपुः ॥ ७७ ॥
चोरः स्वादुर्लघुः शीतः कुष्ठवातकफास्रजित् ॥ ७८ ॥

अथ सुरानामगुणाः।

सुरा गन्धवती दैत्या गन्धाढ्या सुरभिः कुटिः ॥ ७९ ॥
सुरा शीता लघुः कुष्ठग्रहपित्तानिलास्रजित् ॥ ८० ॥

अथ कर्चुरनामगुणाः।

कर्चूरो द्राविड़ो गन्धमूलको दुर्लभः शटी ॥ ८१ ॥
कर्चूरो दीपनो रुच्यः कुष्ठार्शोव्रणकासजित्।
उष्णो लघुर्जयेत् श्वासगुल्मवातकफक्रिमीन् ॥ ८२ ॥

अथ शटीनामगुणाः।

शटी पलाशी षड्ग्रन्था सुव्रता गन्धमूलिनी ॥ ८३ ॥
शटी तिक्ता ज्वरामास्रकासजिद् ग्राहिणी लघुः ॥ ८४ ॥

अथ स्पृक्कानामगुणाः।

स्पृक्काऽसृक् ब्राह्मणी देवी निर्माल्या कोटिका वधूः ॥८५॥
स्पृक्का स्वादु हिमा हृद्या कुष्ठाऽश्मरीत्रिदोषनुत् ॥ ८६ ॥

अथ ग्रन्थिपर्णनामगुणाः।

ग्रन्थिपर्णो नीलपुष्पः शुकपुष्पं शुकच्छदम् ॥ ८७ ॥
ग्रन्थिपर्णो लघुस्तिक्तः कटूष्णः कफवातजित् ॥ ८८ ॥

अथ नलिकानामगुणाः।

नलिका नर्त्तकी शून्या निर्मध्या धमनी नटी ॥ ८९ ॥
नली पित्तास्रजित् शीता लघुर्हृद्या कुष्ठकण्डूजित् ॥९०॥

अथ पद्मकनामगुणाः।

पद्मकं मालयवारुपीतरक्तं सुप्रभः ॥ ९१ ॥
पद्मकं दाहविस्फोटकुष्ठश्लेष्मास्रपित्तहृत्।
गर्भसंस्थापनं शीतं छर्घ्यरोचकदाहजित् ॥९२॥

अथ प्रपौण्डरीकनामगुणाः।

प्रपौण्डरीकं पौण्ड्राह्वं शतपुष्पं सुपुष्पकम् ॥८३॥
पौण्ड्राह्वं शुक्रलं शीतं चक्षुष्यं श्लेष्मपित्तजित् ॥८४॥

अथ तगरद्वयनामगुणाः।

तगरं वर्हिणं जिह्मं वक्राह्वं नहुषं नतम्।
अपरं पिण्डतगरं दीनं कटु महोरगम् ॥८५॥
तगरं मधुरं स्निग्धं तिक्तोष्णं लघु भूतजित्।
विषापस्मारमूर्द्धाक्षिरोगदोषत्रयापहम् ॥८६॥

अथ गोरोचनानामगुणाः।

गोरोचना रुचिर्गौरी रोचना पिङ्गला मता।
मङ्गल्या गौतमी मेध्या वन्द्या गोपित्तसम्भवा ॥८७॥
रोचना शीतला वश्या गर्भस्रावग्रहास्रजित् ॥८८॥

अथ नखद्वयनामगुणाः।

नखाह्वो नखरः शुक्तिः करजर्नागहस्तः खुरः।
शफः शङ्खो व्याघ्रनखमन्यत् व्याघ्रतलं पदम् ॥८९॥
नखद्वयं ग्रहघ्नं वातास्रज्वरकुष्ठजित्।
लघूष्णं शुक्रलं वर्ण्यं हृद्यं स्वादु विषापहम् ॥१००॥

अथ पत्तङ्गनामगुणाः।

पत्तङ्गं पद्मरागं स्याद्रक्तकाष्ठं कुचन्दनम्।
सुरङ्गदं सुरङ्गञ्च पत्तूरं पट्टरञ्जकम् ॥१०१॥
पत्तङ्गं मधुरं शीतं पित्तश्लेष्मव्रणास्रजित् ॥१०२॥

अथ लाक्षाऽलक्तकनामगुणाः।

लाक्षा निर्भर्त्सना रक्ता द्रुमव्याधिः पलङ्कषा।
क्रिमिजा जतु दीप्ताह्वा यावकोऽलक्तको मतः ॥१०३॥
लाक्षा वर्ण्या हिमा बल्या स्निग्धा श्लेष्मास्रपित्तजित्।
व्रणोरःक्षतवीसर्पक्रिमिकुष्ठगदापहा ॥१०४॥

अन्तको गुणैस्तद्वद् विशेषाद् व्यङ्गनाशनः ॥१०५॥

अथ पर्पटीनामगुणाः ।

पर्पटी रञ्जनी कृष्णा जतुका जननी जनी ॥१०६॥

पर्पटी वर्णदा शीता कफपित्तासृकुष्ठजित् ॥१०७॥

अथ पद्मिनीकैरविणीनामगुणाः ।

पद्मिनी बिसिनी ज्ञेया नलिनी सूर्यवल्लभा ॥१०८॥

कुमुद्वती कैरविणी कुमुदिन्युडुपप्रिया ॥१०९॥

पद्मिनी शीतला गुर्वी पित्तघ्नी विषयासृजित् ।

रूक्षा विष्टम्भिनी स्वादुस्तद्वत् कुमुदिनी मता ॥११०॥

अथ पद्मचारिणीनामगुणाः ।

पद्मचारिण्यतिचरा पद्माह्वा चारटी मता ॥१११॥

पद्माऽनुगा कटुस्तिक्ता कषाया कफवातजित् ।

मूत्रकृच्छ्राऽश्मशूलघ्नी श्वासकासविषापहा ॥११२॥

अथ श्वेतकमलनामानि ।

कमलं श्वेतमम्भोजं सारसं सरसीरुहम् ।

सहस्रपत्रं श्रीगेहं शतपत्रं कुशेशयम् ॥११३॥

पङ्केरुहं तामरसं राजीवं पुष्कराह्वयम् ।

पाथोजमम्भोरुहं पद्मं पुण्डरीकं च पङ्कजम् ।

भन्नं सरोजं नलिनमरविन्दं महोत्पलम् ॥११४॥

अथ रक्तोत्पलनामानि ।

रक्तोत्पलं कोकनदं हल्लकं रक्तसन्ध्यकम् ॥११५॥

अथ नीलोत्पलनामानि ।

नीलोत्पलं कुवलयं भद्रमिन्दीवरं स्मृतम् ॥ ११६ ॥

अथ कुमुदनामानि ।

श्वेतं कुवलयं प्रोक्तं कुमुदं कैरवं कुमुत् ॥११७॥

अथ कमलादिगुणाः।

कमलं शीतलं वर्ण्यं मधुरं कफपित्तजित्।
तृष्णादाहास्रविस्फोटविषवीसर्पनाशनम् ॥११८॥
तस्मादल्पगुणं किञ्चिदन्यद्रक्तोत्पलादिकम् ॥११९॥

अथ कह्लारनामगुणाः।

कह्लारं हल्लकं प्रोक्तं सौम्यं सौगन्धिकं महत् ॥१२०॥
कह्लारं ग्राहि विष्टम्भि रूक्षं गुरु सुशीतलम् ॥१२१॥

अथ किञ्जल्कनामगुणाः।

किञ्जल्कः केशरं गौरमापीतं काञ्चनाह्वयम् ॥१२२॥
किञ्जल्कः शीतलो ग्राही रक्तार्शःकफपित्तजित् ॥१२३॥

अथ पद्मबीजनामगुणाः।

पद्मबीजं तु शालोड्यं पद्माक्षं पद्मकर्कटी ॥१२४॥
पद्मबीजं हिमं स्वादु गर्भसंस्थापकं गुरु।
कफवातकरं बल्यं ग्राहि पित्तासृदाहजित् ॥१२५॥

अथ मृणालशालूकनामगुणाः।

मृणालं बिसमम्भोज नालञ्च नलिनीरुहम् ॥१२६॥
पद्मादिमूलं शालूकं शालीनं करहाटकम् ॥१२७॥
मृणालं शीतलं वृष्यं पित्तदाहासृजिद् गुरु।
संग्राहि मधुरं रूक्षं शालूकमपि तद्गुणम् ॥१२८॥

अथ जातीद्वयनामगुणाः।

जाती प्रियवदा राज्ञी मालती सुमना मता।
पीता जात्यपरा पीतपुष्पा काञ्चनपुष्पिका ॥१२९॥
जाती लघूष्णा मूर्द्धाक्षिदन्तार्त्तिव्रणरक्तजित् ॥१३०॥

अथ मल्लिकानामगुणाः।

मल्लिका मोदिनी भृङ्गबन्धना मोदयन्तिका ॥१३१॥
मल्लिकोष्णा लघुर्वृष्या वातपित्तास्ररोगजित् ॥१३२॥

अथ यूथिकाद्वयनामगुणाः ।

यूथिका हरिणी बाला पुष्पगन्धा शिखण्डिनी ।
स्वर्णयूथ्याऽपरा पीता गणिका स्वर्णपुष्पिका ॥१३३॥
यूथी हिमास्रमूर्छार्चिरोगजित् कफवातकृत् ॥१३४॥

अथ कुब्जकाद्वयनामगुणाः ।

कुब्जका भद्रतरुणी बृहत्पुष्पा महासहा ।
शतपत्री तरुण्युता कर्णिका चारुकेशरा ॥१३५॥
रक्ताऽपरा रक्तपुष्पा लाक्षापुष्पाऽतिमञ्जुला ॥१३६॥
शतपत्री हिमा हृद्या ग्राहिणी शुक्रला लघुः ।
दोषत्रयास्रजिद् वर्ण्यमपरोऽपि च तद्गुणः ॥१३७॥

अथ केतकीद्वयनामगुणाः ।

केतकी सूचिकापुष्पी जम्बूकः क्रकचच्छदः ॥१३८॥
सुवर्णकेतकी चान्या लघुपुष्पा सुगन्धिनी ॥१३९॥
केतकी कटुका स्वादुर्लघु स्तिक्ता कफापहा ॥१४०॥

अथ वासन्तीनामगुणाः ।

वासन्ती सारणी कुन्दा प्रहसन्ती वसन्तजा ॥ १४१॥
वासन्ती शीतला लघ्वी तिक्ता दोषत्रयापहृत् ॥१४२॥

अथ नैपालीद्वयनामगुणा ।

नैपाली प्रेमिका लूता लापिनी वनमल्लिका ॥१४३॥
वार्षिकी त्रिपुटा त्वन्या शीवल्ली षट्पदप्रिया ॥१४४॥
नेपाली शीतला तिक्ता लघ्वी दोषत्रयापहा ।
कर्णाक्षिमुखरोगघ्नी तद्गुणा वार्षिकी मता ॥१४५॥

अथ माधवीनामगुणाः ।

माधवी मण्डपः कामी पुष्पेन्द्रोऽभीष्टगन्धकः ॥१४६॥
माधवी मधुरा शीता लघ्वी दोषत्रयापहा ॥१४७॥

अथ चम्पकनामगुणाः ।

चम्पकः काचरो रम्यश्चाम्पेयः सुरभिश्चलः ॥१४८॥
चम्पकः शीतलः कृच्छ्रकफपित्तास्रवातजित् ॥१४९॥

अथ पुन्नागनामगुणाः ।

पुन्नागः पाटलीपुष्पः केशरः षट्पदालयः ॥१५०॥
पुन्नागो मधुरः शीतो रक्तपित्तकफापहः ॥१५१॥

अथ वकुलनामगुणाः ।

वकुलः केशरो मद्यगन्धः सिंहो विशारदः ॥१५२॥
वकुलः शीतलः श्लेष्मपित्तदन्तगदापहः ॥१५३॥
तत्फलं वातलं ग्राहि कफपित्तहरं हिमम् ॥१५४॥

अथ बुकनामगुणाः ।

बुकः शुकः स्थूलपुष्पो वसुकः शिवशेखरः ॥१५५॥
बुकः शीतो विषश्लेष्मपित्तशूक्कासदाहहृत् ॥१५६॥

अथ कुन्दनामगुणाः ।

कुन्दः शुक्लः सदापुष्पो भृङ्गबन्धुर्मनोरमः ॥१५७॥
कुन्दः शीतो लघुः श्लेष्मशिरोरुग्विषपित्तजित् ॥१५८॥

अथ मुचुकुन्दनामगुणाः ।

मुचुकुन्दः चित्रकश्चचिबुकः प्रतिविष्णुकः ॥१५९॥
मुचुकुन्दः शिरःपीडापित्तास्रविषनाशनः ॥१६०॥

अथ विचच्छिद्रनामगुणाः ।

भूमण्डली विचच्छिद्रो द्विपदाष्टपदी तथा ॥१६१॥
शीतो लघुर्विचच्छिद्रः कफपित्तविषापहः ॥१६२॥

अथ तिलकनामगुणाः ।

तिलकः सुरकः श्रीमान् विचित्रो मुखमण्डनः ॥१६३॥
तिलकः कफनुत् कुष्ठहरोऽत्युष्णो रसायनः ॥१६४॥

अथ गणेरुकनामगुणाः ।

गणेरुकः कर्णिकारः कर्णेय गणिकारिका ॥१६५॥

गणेरुः शोधनः शोफश्वासव्रणकुष्ठनुत् ॥१६६॥

अथ बन्धूकनामगुणाः ।

बन्धुजीवः शरत्पुष्पो बन्धुः बन्धूकः रक्तकः ॥१६७॥

बन्धुकः कफकृद् ग्राही रक्तपित्तहरो लघुः ॥१६८॥

अथ जपात्रिसन्ध्यापुष्पनामगुणाः ।

जपाश्वेतं जपारक्तं त्रिसन्ध्या सारुणा सिता ॥१६९॥

जपा संग्राहिणी केश्या त्रिसन्ध्या कफपित्तजित् ॥१७०॥

अथ सिन्दूरीनामगुणाः ।

सिन्दरी रक्तबीजा स्याद्रक्तपुष्पा सुकोमला ॥१७१॥

सिन्दूरी कफपित्तासतृष्णावान्तिहरा हिमा ॥१७२॥

अथ तुलसीनामगुणाः ।

तुलसी सुरसा गौरी भूतघ्नी बहुमञ्जरी ॥१७३॥

तुलसी कटुका तिक्ता हृद्योष्णा दाहपित्तकृत् ।

दीपनी कुष्ठकृच्छ्रास्रपार्श्वरुक् कफवातजित् ॥१७४॥

अथ मरुवकनामगुणाः ।

मरुर्मरुवकस्तीक्ष्णः खरपुष्पः फणिज्झकः ॥१७५॥

मरुरग्निप्रदो हृद्यस्तीक्ष्णोष्णः पित्तलो लघुः ।

वृश्चिकादिविषश्लेष्मवातकुष्ठकृमीन् जयेत् ॥१७६॥

अथ दमननामगुणाः ।

दमनो मदनो दान्तो दमो मुनिसुतो मुनिः ।

गन्धोत्कटो दमनको विनीतः कुलपत्रकः ॥१७७॥

दमनोऽग्निकुष्ठास्रभेदकण्डूत्रिदोषजित् ॥१७८॥

अथ बर्बरीशयननामगुणाः ।

बर्बरी अर्जकः कुष्ठो वैकुण्ठः स्यात् कुठेरकः ॥१७९॥

कपित्थार्जक इत्यन्यो वटपत्रः कठिञ्जरः ॥१८०॥
कृष्णार्जकः कालमालः करालः कृष्णमल्लिका ॥१८१॥
बर्बरी वितयं रूक्षं शीतं कटु विदाहि च।
पित्तलं कफवातासृग्दद्रुक्रिमिविषापहम् ॥१८२॥
यो राज्ञां मुखतिलकः कटारमल्ल-
स्तेन श्रीमदननृपेण निर्मितेऽत्र।
ग्रन्थेऽभूत् मदनविनोदनाम्नि पूर्णः
कर्पूरप्रभृतिसुगन्धिद्रव्यवर्गः ॥१८३॥
इति कर्पूरादि तृतीयवर्गः।

---

## अथ सुवर्णादिवर्गः।

यद्दाज्ञया विश्वकृतोऽपि देवा
ब्रह्मादयो यान्ति मुहुर्भवन्ति।
अचिन्त्यकृत्यं पुरुषं पुराणं
गोपत्वमाप्तं तमुपाश्रयामि ॥ १ ॥

अथ सुवर्णनामगुणाः।

सुवर्णं काञ्चनं हेम हाटकं तप्तकाञ्चनम्।
चामीकरं शातकुम्भं तपनीयं च रुक्मकम्।
जाम्बूनदं हिरण्यं च कनकं जातरूपकम् ॥ २ ॥
सुवर्णं शीतलं हृद्यं वर्ण्यं गुरु रसायनम्।
कान्तिकरं विषोन्मादत्रिदोषज्वरशोषजित्।
कषायं तिक्तमधुरं सुवर्णं गुरु लेखनम् ॥ ३ ॥

अथ रूप्यकनामगुणाः।

रूप्यकं रजतं रूप्यं तारं श्वेतं वसूत्तमम् ॥ ४ ॥

रूप्यं शीतं सरं वातपित्तहारि रसायनम्।
लेखनञ्च कषायाम्लं स्वादुपाकरसं शुभम्।
वयसः स्थापनं स्निग्धं धातूनां हितमुच्यते ॥५॥

अथ ताम्रनामगुणाः।

ताम्रं म्लेच्छमुखं शुल्वं नेपालं रविनामकम्।
उदुम्बरं सूर्यप्रियं रक्ताङ्गं रक्तधातुकम् ॥ ६ ॥
ताम्रं सरं लघु स्वादु शीतं पित्तकफापहम्।
रोपणं पाण्डुकुष्ठार्शःश्वयथुश्वासकासजित् ॥ ७ ॥

अथ कांस्यनामगुणाः।

कांस्यं दीप्तं लोहं घोषं वह्निलोहं प्रकाशकम् ॥ ८ ॥
कांस्यं गुरूष्णं चक्षुष्यं कफपित्तहरं सरम् ॥ ९ ॥

अथ पीतलोहनामगुणाः।

पीतलोहं सिंहलकं कपिलं सौकुमारकम्।
वर्त्तलोहं त्रिलोहञ्च राजरीतिर्महेश्वरी ॥१०॥
पीतलोहं हिमं रूक्षं कटूष्णं कफपित्तनुत् ॥११॥

अथ रङ्गनामगुणाः।

रङ्गक तीरकं वङ्गं त्रपु स्यात् कुटी घनम् ॥१२॥
रङ्गं लघु सरं रूक्षमुष्णं मेहकफक्रिमीन्।
निहन्ति पाण्डुं सश्वासं चक्षुष्यमीषत् तु पित्तलम् ॥१३॥

अथ यशदनामगुणाः।

यशदं रङ्गसदृशं रीतिहेतुश्च तन्मतम् ॥१४॥
यशदं तुवरं तिक्तं शीतलं कफपित्तहृत्।
चक्षुष्यं परमं मेहान् पाण्डुं श्वासञ्च नाशयेत् ॥१५॥

अथ सीसनामगुणाः।

सीसं धातुमलं नागपुरञ्च परिपिष्टकम्।
यवनेष्टं च भुजगो योगेष्टं लघ्यकं विदुः ॥१६॥

सोसं रङ्गगुणं ज्ञेयं विशेषात्मेहनाशनम् ॥१७॥

अथ लोहतत्किट्टनामगुणाः ।

लोहं शस्त्रायसं कुष्ठं व्यङ्गं पारावतं घनम् ।
शस्त्रायसस्तन्मलं किट्टं मण्डूरो लोहज रजः ॥१८॥
लोहं सरं गुरु स्वादु कषायं कफपित्तनुत् ।
शीतं नेत्रहितं रूक्षं बलदं वातलं सरम् ।
शोफकुष्ठप्रमेहार्शोगरपाण्डुक्रिमीन् जयेत् ॥१९॥
तत्किट्टं तद्गुणं ज्ञेयं विशेषात् पाण्डुनाशनम् ॥२०॥

अथ पारदनामगुणाः ।

पारदश्चपलो हेमनिधिः सूतो रसोत्तमः ।
त्रिनेत्रो रोपणः स्वामी हरबीजं रसः प्रभुः ।
रसेन्द्रश्च इति ख्यातो रसलोहं महारसः ॥२१॥
पारदः क्रिमिकुष्ठघ्नश्चक्षुष्योष्णो रसायनः ॥२२॥

अथ अभ्रकनामगुणाः ।

अभ्रकं स्वच्छमाकाशं पटलं वरपीतकम् ॥२३॥
अभ्रं गुरु हिमं बल्यं कुष्ठमेहत्रिदोषनुत् ॥२४॥

अपरञ्च ।

गगनं क्रिमिकुष्ठमेहहा विशदं शुक्रकरञ्च दीपनम् ।
कथितं मुनिभिश्च पूर्वजैर्बलकृत् शुक्रकरञ्च सेवितम् ॥२५॥

अथ गन्धकनामगुणाः ।

गन्धः सौगन्धिको लेखो गन्धाश्मा गन्धपीतकः ।
शैलेनको बलिवसा वेगन्धो गन्धको बलिः ॥२६॥
गन्धकः कटुकः पाके वीर्योष्णः पित्तलः सरः ।
हन्ति कुष्ठक्षयप्लीहकफवातान् रसायनः ॥२७॥

अथ सुवर्णमाक्षिकनामगुणाः ।

माक्षिकं धातुमाक्षीकं ताप्यं ताप्योत्थमुच्यते ॥२८॥

माक्षिकं तुवरं हृद्यं स्वर्य्यं लघु रसायनम्।
चक्षुष्यं कुष्ठशोफार्शोमेहवन्त्यर्त्तिपाण्डुताः।
व्यपायि कटुकं हन्ति कुष्ठोदरविषग्रयान् ॥२८॥

अथ मनःशिलानामगुणाः।

मनःशिला शिला गोला नेपाली कुनटी कुला।
दिव्यौषधिर्नागमाता मनोगुप्ता मनोऽग्निका ॥३०॥
मनःशिला कफघ्नहरा सरोष्णा लेखनी कटुः।
तिक्ता स्निग्धा विषश्वासकासभूतकफास्रजित् ॥३१॥

अथ हरितालनामगुणाः।

हरितालमलं ताम्रं गोदन्तं नटभूषणम् ॥३२॥
हरितालं कटु स्निग्धं कषायोष्णं विषं जयेत्।
कण्डूकुष्ठास्यरोगास्रकफपित्तकचग्रहान् ॥३३॥

अथ गैरिकनामगुणाः।

गैरिकं रक्तपाषाणं गिरिजञ्च गवेधुकम् ॥३४॥
स्वर्णवर्णं तथा स्वर्णमण्डलं स्वर्णगैरिकम् ॥३५॥
गैरिकं दाहपित्तास्रकफहिक्काविषापहम्।
चक्षुष्यमन्यत् तद्वच्च विशेषाद्दाह्तिनाशकम् ॥३६॥

अथ तुत्थद्वयनामगुणाः।

तुत्थखर्परिका तुत्थमथ तामम्नुच्यते ॥३७॥
मयूरग्रीवकं चान्यत् शिखिकण्ठं च तुत्थकम् ॥३८॥
तुत्थकं लेखनं भेदि कण्डूकुष्ठविषापहम्।
कफक्रिमिहरं तद्वदन्यत् चक्षुष्यमुत्तमम् ॥३९॥

अथ कासीसद्वयनामगुणाः।

कासीसं धातुकासीसं खेचरं ताम्रलोमकम् ॥४०॥
अपरं पुष्पकासीसं तुवरं चक्षुरागभृत् ॥४१॥
कासीसद्वयमप्योष्णं तिक्तं केश्यं दृशोर्हितम्।

हन्ति कण्डूविषश्चित्रमूत्रकृच्छ्रकफानिलान् ॥४२॥

अथ हिङ्गुलनामगुणाः।

हिङ्गुलं दरदं म्लेच्छं सैकतं चूर्णपारदम् ॥४३॥
हिङ्गुलं पित्तकफनुत् चक्षुष्यं विषकुष्ठहृत् ॥४४॥

अथ सिन्दूरनामगुणाः।

सिन्दूरं नागजं रक्तं शोणं शृङ्गारभूषणम्।
वसन्तमण्डनं नागरक्तं रक्तरजस्तथा ॥४५॥
सिन्दूरमुष्णं वीसर्पकुष्ठकण्डूविषापहम्।
भग्नसन्धानजननं व्रणशोधनरोपणम् ॥४६॥

अथ सौवीरस्रोतोऽञ्जननामगुणाः।

सौवीरमञ्जनं कृष्णं कालनीलं सुवीरजम् ॥४७॥
स्रोतोऽञ्जनं तु स्रोतोजं नदीजं यामुनं वरम् ॥४८॥
सौवीरं ग्राहि मधुरं चक्षुष्यं कफवातजित्।
सिध्मक्षयास्रनुत् शीतं स्रोतोऽञ्जनसपोद्दयम् ॥४९॥

अथ रसाञ्जननामगुणाः।

रसाञ्जनं रसोद्भूतं तार्क्ष्यशैलञ्च तार्क्ष्यजम्।
रसाग्रं कृत्रिमं तार्क्ष्यं दार्व्यं दार्वीरसोद्भवम् ॥५०॥
रसाञ्जनं कटु श्लेष्ममुखनेत्रविकारजित्।
उष्णं रसायनं तिक्तं छेदनं व्रणदोषजित् ॥५१॥

अथ पुष्पाञ्जननामगुणाः।

पुष्पाञ्जनं पुष्पकेतु रीतिकं कुसुमाञ्जनम् ॥५२॥
पुष्पाञ्जनं हिमं प्रोक्तं कासाक्षिपटलापहम् ॥५३॥

अथ शिलाजतुनामगुणाः।

शिलाजत्वश्मजं शैलनिर्यासो गिरिजाह्वयम्।
शिलाह्वं गिरिजं शैलं शैलेयं गिरिजत्वपि ॥५४॥
शिलाजतूष्णं कटुकं योगवाहि रसायनम्।

छर्दिप्रमेहवातार्शः कुष्ठमेदाश्मशर्कराः।
हन्ति श्वासक्षयोन्मादरक्तशोफकफक्रिमीन् ॥५५॥

अथ बोलद्वयनामगुणाः।

बोलं गन्धरसं वोरं निर्लोहं वर्वरं रसम्।
सुगन्धि सौरभं पिण्डं रसगन्धश्च तद्द्विधा ॥५६॥
बोलं रक्तहरं शीतं मेध्यं दीपनपाचनम्।
ज्वरापस्मारकुष्ठघ्नं गर्भाशयविशोधनम् ॥५७॥

अथ स्फटिकादिनामगुणाः।

स्फटिकाख्याऽमृता स्वच्छा काङ्क्षी सौराष्ट्रसम्भवा ॥५८॥
आढकी तुवरी त्वन्या स्फुटिका सुरमृत्तिका ॥५९॥
स्फटिकाख्या कषायोष्णा कफपित्तविषव्रणान्।
निहन्ति श्वित्रवीसर्पान् तुवरी तद्गुणा मता ॥६०॥

अथ समुद्रफेननामगुणाः।

समुद्रफेनो डिण्डीरः फेनो वारिकफो द्विजः ॥६१॥
समुद्रफेनश्चक्षुष्यो लेखनः शमनः सरः ॥६२॥

अथ प्रवालनामगुणाः।

प्रवालं विद्रुमं सिन्धु लताग्रं रक्तवर्णकम् ॥६३॥
पुष्टिकान्तिबलकरं वर्द्धनं बलशुक्रयोः ॥६४॥

अथ मौक्तिकनामगुणाः।

मौक्तिकं तौतिला मुक्ताफलं मुक्ता च शुक्तिजम् ॥६५॥
मौक्तिकं मधुरं शीतं रोगघ्नं विषनाशनम्।
हृष्यं नेत्रहितं मध्यं राजयक्ष्मगदापहम् ॥६६॥

अथ माणिक्यनामानि।

माणिक्यं पद्मरागं स्यात् वसु रत्नं सुरत्नकम् ॥६७॥

अथ सूर्यकान्तनामानि।

सूर्यकान्तः सूर्यमणिः सूर्याश्मो दहनोपलः ॥६८॥

अथ चन्द्रकान्तनामानि ।

चन्द्रकान्तश्चन्द्रमणि स्फटिक स्फटिकोपल ॥६९॥

अथ गोमेदनामानि ।

गोमेद सुन्दर पीत रत्न तृणचर तथा ॥७०॥

अथ हीरकनामानि ।

हीरक भिदुर वज्र सूचीवक्त्र वरारकम् ॥७१॥

अथ नील वैदूर्ययो नामानि ।

नीलरत्न नीलमणि वैदूर्य बालवायजम ॥७२॥

अथ मरकतमणिनामानि ।

गारुत्मत मरकतमश्मगर्भो हरिन्मणि ॥७३॥

अथ मुक्तास्फोटनामगुणा ।

मुक्तास्फोटोऽब्धिमण्डूकी शुक्तिर्मौक्तिकमन्दिरम ॥७४॥
शुक्तिकान्तिकरी स्निग्धा रुच्या श्वासशूलासृग्घृत् ॥७५॥

अथ प्रवालादिनामगुणा ।

प्रवालमुक्तिमाणिक्यसूर्य्यशीतकरोपला ।
गोमेदवज्रवैदूर्य्यनीलगारुत्मतादय ॥७६॥
चक्षुष्या लेखनी शीता कषाया मधुरा सरा ।
माङ्गल्या धारणादाह दुष्टग्रहविषापहा ॥७७॥

अथ शङ्खनामगुणा ।

शङ्खकम्बुर्जलचरो वारिजो दीर्घनि स्वन ॥७८॥
शङ्खो हि कटुक पाके कषायो मधुरो लघु ।
चक्षुष्यो लेखन पङ्क्तिशूलश्वासकफास्रजित् ॥७९॥

अथ लघुशङ्खकपर्दक नामगुणा ।

शङ्खो लघु शङ्खनख शम्बूका वारिशुक्तय ।
कपर्दा क्षुल्लका श्वेतायराचरा वराटका ॥८०॥

लघु यद्गादयः शीता नेत्ररुक्स्फोटनाशनाः ॥८१॥

अथ खटीद्वयनामगुणाः।

खटिका कठिनी चापि लेखनी श्वेतधातुकः ॥८२॥
तद्भेदो गौरपाषाणः घोरोनाम्ना उदाहृतः ॥८३॥
खटी दाहास्रनुत् शीता गौरयाथापि तद्गुणः ॥८४॥

अथ पङ्कवालुकयोः नामगुणाः।

पङ्कः कर्दमको ज्ञेयो वालुका सिकतास्तथा ॥८५॥
पङ्को दाहास्रपित्तार्त्तिशोषघ्नः शीतलः सरः।
वालुका लेखनी शीता व्रणोरःक्षतनाशिनी ॥८६॥

अथ चुम्बकपाषाणनामगुणाः।

चुम्बकः कान्तपाषाणोऽयस्कान्तो लोहकर्षकः ॥८७॥
चुम्बको लेखनः शीतो मेदोविषगरापहः ॥८८॥

अथ काचनामगुणाः।

काचः स्फटिमरत्नं स्यात् त्रिगुणः काचभाजनम् ॥८९॥
काचो विदारणो रूक्षरस्तथो लेखनो लघुः ॥९०॥

यो राज्ञां मुकुटतिलकः कटारमल्ल-
स्तेन श्रीमदनमृपेण निर्मितेऽस्मिन्।
ग्रन्थेऽभूत् मदनविनोदनाम्नि पूर्ण-
स्त्रितोऽयं ललितपदैः सुवर्णवर्गः ॥९१॥

इति सुवर्णादि चतुर्थवर्गः।

---

## अथ वटादिवर्गः।

करेण संगृह्य कुचौ महिष्याः पयः पिबन्तं पुरुषं पुराणम्।
शिवितनौमं परिशममौनं समाधनोनं निगमान्नवामि ॥१॥

( ४ ) अथ वटनामगुणा ।

वटो रक्तफला क्षीरी बहुपादो वनस्पति ।
यक्षावास पदारोही न्यग्रोध स्कन्धजो ध्रुव ॥२॥
वट शीतो गुरुर्ग्राही कफपित्तव्रणापह ॥३॥

अथ पिप्पलनामगुणा ।

पिप्पल श्यामलोऽश्वत्थ क्षीरवृक्षो गजाशन ।
हरिवासश्चलदलो मङ्गल्यो बोधिपादप ॥४॥
पिप्पलो दुर्जर शीत पित्तश्लेष्मव्रणास्रजित् ॥५॥

अथ पारिशोऽश्वत्थनामगुणा ।

पारिशोऽन्य फलीश स्यात् कपिचूत कपीतन ॥६॥
पारिशोऽश्वत्थको हृद्य स्निग्ध श्लेष्मक्रिमिप्रद ॥७॥

अथ उदुम्बरनामगुणा ।

उदुम्बर क्षीरवृक्षो जन्तुवृक्ष सदाफल ।
हेमदुग्ध क्रिमिफलो यज्ञाङ्ग शीतवल्कल ॥८॥
उदुम्बरो हिमो वर्ण्यो कफपित्तास्रजिद् गुरु ॥९॥

अथ काकोदुम्बरिकानामगुणा ।

काकोदुम्बरिका फल्गुर्मलपूश्चित्रभेषजम् ॥१०॥
काकोदुम्बरिका तद्वत् विशेषात् श्वित्रनाशिनी ॥११॥

अथ प्लक्षनामगुणा ।

प्लक्ष प्लवयारवृक्ष सुपार्श्वो गर्दभाण्डक ।
वटी कमण्डलुर्यूप पिप्परियारुदर्शन ॥१२॥
प्लक्ष शीतो व्रणश्लेष्मपित्तशोथविसर्पजित् ॥१३॥

अथ पञ्चक्षीरवृक्षनामगुणा ।

न्यग्रोधोदुम्बरोऽश्वत्थपारीशप्लक्षपादपा ।
पञ्चैते क्षीरिण प्रोक्तास्तेषां त्वक् पञ्चवल्कलम् ॥१४॥
त्वक्पञ्चक हिम ग्राहि व्रणशोथविसर्पजित् ॥१५॥

केचित् तु पारीशस्थाने शिरीषं वेतसं परे ॥१६॥
चीरत्वचा हिमा वर्ण्या योनिदोषव्रणापहाः ।
शोफपित्तकफासृघ्नाः स्तन्या भग्नास्थियोगदाः ॥१७॥
तेषां पत्रं हिमं ग्राहि कफवातासृग्नुत् लघुः ॥१८॥
फलं विष्टम्भि संग्राहि रक्तपित्तकफापहम् ॥१९॥

अथ नन्दीवृक्षनामगुणाः ।

नन्दीवृक्षोऽश्वत्थभेदः प्ररोही गजपादपः ॥२०॥
नन्दीवृक्षोऽश्वत्थगुणो लघूष्णो गरलुत् पुनः ॥२१॥

अथ कदम्बद्वयनामगुणाः ।

कदम्बो गन्धमत्तपुष्पः प्रावृषेण्यो मनोरतिः ॥२२॥
अन्यो धूलिकदम्बः स्यात् नीपो राजकदम्बकः ॥२३॥
कदम्बः शीतलः श्लेष्मपित्तरक्तगदापहः ॥२४॥

अथ ककुभनामगुणाः ।

ककुभोऽर्जुननामा स्यात् नदीसर्जः शठद्रुमः ॥२५॥
ककुभः शीतलो भग्नक्षतक्षयविषासृजित् ॥२६॥

अथ शिरीषनामगुणाः ।

शिरीषः प्लवगो विप्र शुकाहृवः कपीतनः ।
मृदुपुष्पः श्यामवर्णो भण्डीरः शङ्खिनीफलः ॥२७॥
शिरीषः शीतलो वर्ण्यो विषवीसर्पशोथजित् ॥२८॥

अथ आर्त्तगलनामगुणाः ।

अगंटः स्यादार्त्तगलो वहुकण्टः प्रघर्षणः ॥२९॥
अगंटस्तुवरः शीतो व्रणशोधनरोपणः ॥३०॥

अथ वेतसद्वयनामानि ।

वेतसो वञ्जुलो नम्रो वानीरो दीर्घपत्रकः ॥३१॥
नादेयो मध्यपुष्पोऽन्यस्तोयकामो निकुञ्जकः ।

अथ जलवेतसनामानि।
जलीका सभृतोऽम्भोजो निचुलो जलवेतसः ॥३२॥

अथ इज्जलनामानि।
इज्जलो हिज्जलो गुच्छफला स्यात् कच्छयोनिका ॥३३॥

अथ वेतसादिगुणानि।
वेतस शीतलो दाहशोफार्शोयोनिरुग्व्रणान्।
हन्ति वीसर्पकृच्छ्राश्मरीपित्तास्ररोकफानिलान् ॥३४॥
जलजो वेतसः शीतः संग्राही वातकोपनः ॥३५॥
इज्जलस्तद्गुणः प्रोक्तो विशेषाद्विषनाशनः ॥३६॥

अथ श्लेष्मान्तकनामगुणाः।
श्लेष्मान्तकः कर्बुदारः पिच्छलो भूतवादयः।
शेलुः शैलुश्च शेलूकः शेलिको हिजकुत्सितः ॥३७॥
श्लेष्मान्तको विषस्फोटव्रणवीसर्पकुष्ठजित्।
केश्योष्णस्तत्फलं ह्रद्यं वातपित्तक्षयासृजित् ॥३८॥

अथ पिलुनामगुणा।
पीलुः शीतः सहस्रांशी तोयस्तु करभप्रियः।
सहस्राङ्गी गुडफलस्तत्फल पीलु पीलुजम् ॥३९॥
पीलूष्णं दीपनं भेदि रक्तपित्तकरं लघु।
गुल्मार्शःप्लीहवाताश्मकफहारि रसायनम् ॥४०॥

अथ शाक (शैगुण) नामगुणा।
शाकः खरच्छदो भूमिसहो दीर्घच्छदो मतः ॥४१॥
शाक श्लेष्मानिलामृघ्नो गर्भसन्धानदो हिम ॥४२॥

अथ सालनामगुणा।
सालः सर्जरसः सर्जः श्योकर्णादिय पत्रकः ॥४३॥
सालो ग्राही व्रणस्वेदध्नरुक् विषनुत् हिमः ॥४४॥

अथ तमालनामगुणाः।

तमाल उक्तस्तापिच्छः कालस्कन्धोऽमितद्रुमः ॥४५॥
तमालस्तद्गुणः शीयदाहविस्फोटहृत् पुनः ॥४६॥

अथ खदिरद्वयनामगुणाः।

खदिरो रक्तसारः स्यात् गायत्री वालपत्रकः।
खदिरः श्वेतसारोऽन्यः कार्मुकः कुब्जकण्टकः ॥४७॥
खदिरः शीतलो दन्त्यः क्रमिमेहज्वरव्रणान्।
श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान् जयेत् ॥४८॥
निर्यासस्तस्य मधुरो वल्यः शुक्रविवर्द्धनः ॥४९॥
सारस्तु विशदो वल्यो मुखरोगकफास्रजित् ॥५०॥

अथ इरिमेदनामगुणाः।

इरिमेदो विट्खदिरो गोधास्कन्धोऽरिमेदकः ॥५१॥
इरिमेदः कषायोष्णो मुखदन्तगदास्रनुत्।
हन्ति कण्डूविषश्लेष्मक्रिमिकुष्ठव्रणान् जयेत् ॥५२॥

अथ वव्वूरनामगुणाः।

वव्वूरः किङ्किरातः स्यात् पीतकः पीतपुष्पकः ॥५३॥
वव्वूरः कफनुद् ग्राही कुष्ठक्रिमिविषापहः।
रक्तपित्तं कषायेण निहन्ति दिनसप्तकात् ॥५४॥

अथ वीजक (पियाल) नामगुणाः।

वीजकोऽसनकः सौरी प्रियः काम्योऽलकप्रियः ॥५५॥
वीजकः कुष्ठवीसर्पश्वित्रमेहज्वरक्रिमीन्।
हन्ति श्लेष्मास्रपित्तानि त्वच्यः केश्यो रसायनः ॥५६॥

अथ तिनिशनामगुणाः।

तिनिशः स्यन्दनो नेमी सर्वसारोऽश्मगर्भकः ॥५७॥
तिनिशः श्लेष्मपित्तास्रमेदःकुष्ठप्रमेहनुत् ॥५८॥

अथ भूर्जपत्रनामगुणाः ।

भूर्जो भुजो बहुपुटो मृदुत्वक् लेख्यपत्रकः ॥५८॥
भूर्जो भूतघ्नहृद्दृष्टो कर्णरुक् रक्तपित्तजित् ॥६०॥

अथ पलाशनामगुणाः ।

पलाशः किंशुकः क्रिमी याज्ञिको ब्रह्मपादपः ।
वातरोषेष्टो रक्तपुष्पः त्रिपर्णो समिद्वरः ॥६१॥
पलाशो दीपनो वृष्यः सरोष्णो व्रणगुल्मजित् ।
भग्नसन्धानकृत् दुष्टग्रहण्यर्शःक्रिमीन् हरेत् ॥६२॥
तत्पुष्पं कफपित्तास्रकृच्छ्रजिद् ग्राहि शीतलम् ॥६३॥
फलं लघूष्णं मेहार्शःक्रिमिदुष्टकफापहम् ॥६४॥

अथ धवनामगुणाः ।

धवो नन्दितरुर्गौरः शकटाख्यो धुरन्धरः ॥६५॥
धवः शीतप्रमेहार्शःपाण्डुपित्तकफापहः ॥६६॥

अथ धन्वननामगुणाः ।

धन्वनो गोत्रविटपो धर्मणो गोत्रपुष्पकः ॥६७॥
धन्वनः कफपित्तास्रकासजित् तुवरो लघुः ॥६८॥

अथ सर्जनामगुणाः ।

सर्जोऽजकर्णः स्वेदघ्नो ललाम्बुः कुदेहकः ॥६९॥
सर्जो सर्वः कफस्वेदमलपित्तकृमीन् जयेत् ॥७०॥

अथ शाखोटनामगुणाः ।

शाखोटः स्यात् पीतफलश्छागो चीरविनाशनः ॥७१॥
शाखोटो रक्तपित्तार्शोवातघ्नो वातिसारजित् ॥७२॥

अथ वरुणनामगुणाः ।

वरुणो वरणः श्वेतः शाकहृच्चः कुमारकः ॥७३॥
वरुणः पित्तलो भेदी श्लेष्मकृच्छ्राश्ममारुतान् ।
निहन्ति गुल्मवातास्रक्रिमीणांश्च दीपनः ॥७४॥

अथ जिङ्गिनीनामगुणाः।

जिङ्गिनी झिङ्गिनी झिङ्गी सुनिर्यासा प्रमोदिनी ॥७५॥
जिङ्गिनी व्रणहृद्रोगवातातिसारजित् कटुः।
तमालशालवत् वेद्यो दाहविस्फोटहृत् पुनः ॥७६॥

अथ शल्लकीनामगुणाः।

शल्लकी सल्लकी शल्ली गजभक्ष्या महेरुणा।
मन्धवीरा कुन्दुरुकी सुश्रवा वनकर्णिका ॥७७॥
शल्लकी व्रणकुष्ठासृग्वपित्तातिसारजित् ॥७८॥

अथ इङ्गुदनामगुणाः।

इङ्गुदी मङ्कुकी तुच्छः कण्टकस्तापसद्रुमः ॥७९॥
इङ्गुदः कुष्ठभूतादिग्रहव्रणविषक्रमीन्।
हन्त्युष्णः श्वित्रशूलघ्नः तत्फलं कफवातजित् ॥८०॥

अथ कटम्भरनामगुणाः।

कटम्भरयाकश्शृङ्गी कटभी व्रणशोगण्डीकः ॥८१॥
कटम्भरः प्रमेहार्शोनाडीव्रणविषक्रमीन्।
हन्त्युष्णः कफकुष्ठघ्नः तत्फलं कफगुक्रनुत् ॥८२॥
निर्यासोऽस्य गुरुर्हृद्यो बलकृत् वातनाशनः ॥८३॥

अथ मुष्ककनामगुणाः।

मुष्ककी मोक्षको घण्टापाटलिः क्षुद्रपाटला ॥८४॥
मुष्ककी कफवातघ्नो ग्राही गुल्मविषक्रमीन्।
हन्त्युष्णो वस्तिरुग् कण्डूस्तत्पुष्पं कफपित्तजित् ॥८५॥
निर्यासोऽस्य परं हृद्यः शोषपित्तानिलापहः ॥८६॥

अथ पारिभद्रनामगुणाः।

पारिभद्रो निम्बतरुः रक्तपुष्पं प्रभद्रकः।
कण्टकोपारिजातः स्यात् मन्दारः कटिकिंशुकः ॥८७॥
पारिभद्रः कृमिघ्नश्च मेदःकफानिलापहः ॥८८॥

अथ शाल्मलीनामगुणाः ।

शाल्मली तूलिनी मोचा कुक्कुटो रक्तपुष्पिका ।
कण्टकाढ्या स्थूलफला पिच्छिला चिरजीविनी ॥८९॥
शाल्मली शीतला हृद्या वृंहणी रक्तपित्तजित् ॥९०॥
निर्यासोऽस्य परं हृद्यः शोफपित्तानिलासृजित् ।
रसायनवरा स्निग्धा तत्पुष्पं ग्राहि पित्तजित् ॥९१॥

अथ तूणिनामगुणाः ।

तूणिः कुठेर आपीतस्तूनिको नन्दोपादपः ॥९२॥
तूणिः ग्राही हिमो हृद्यो व्रणकुष्ठास्रपित्तहा ॥९३॥

अथ सप्तपर्णनामगुणाः ।

सप्तपर्णो गुच्छपुष्पः छत्रो शाल्मलिपत्रकः ॥९४॥
सप्तपर्णो व्रणघ्नो ग्रवातकुष्ठहरः सरः ॥९५॥

अथ हारिद्रकनामगुणाः ।

हारिद्रकः पीतवर्णः श्रीमान गौरद्रुमो वरः ॥९६॥
हारिद्रकः कफहरो व्रणशोधनरोपणः ॥९७॥

अथ करञ्जपूतिकरञ्जनामगुणाः ।

करञ्जो नक्तमालः स्यात् नक्ताह्वो घृतपर्णकः ॥९८॥
पूतीकोऽन्यः पूतिपर्णः प्रकीर्यश्चिरबिल्वकः ॥९९॥
करञ्जः कटुकस्तीक्ष्णो वीर्य्योष्णो योनिदोषजित् ।
कुष्ठोदावर्त्तगुल्मार्शोव्रणक्रिमिकफापहः ॥१००॥
तत्फलं कफवातघ्नं मेहार्शः क्रिमिकुष्ठजित् ॥१०१॥
तत्पत्रं कफवातार्शःक्रिमिशोथहरं परम् ॥१०२॥

अथ भद्गारवल्लरी (करञ्जभेदः) नामगुणाः ।

करञ्जो काकतिक्ता च ययस्याद्गारवल्लरी ॥१०३॥
करञ्जिकोप्यथातार्शःक्रिमिकुष्ठप्रमेहनुत् ॥१०४॥

अथ महाकरञ्जनामगुणाः।

तिरिगिच्छिर्गलकरञ्जः करञ्जो चीरिणो द्विपः ॥१०५॥
तिरिगिच्छिर्वलासार्शःकृमिकुष्ठप्रमेहहृत् ॥१०६॥

अथ शमीद्वयनामगुणाः।

शमी तुङ्गा शक्तुफला पवित्रा केशहृत्फला।
लक्ष्मीः शिवाऽन्या मङ्गल्या भूशमी शङ्कराप्रिया ॥१०७॥
शमी शीता लघुः श्वासकुष्ठार्शःकफहृत् सरा ॥१०८॥
तत्फलं पित्तलं रूक्षं मेध्यं केशविनाशनम् ॥१०८॥

अथ टिण्टिनिकानामगुणाः।

शिरीषिका टिण्टिनिका दुर्बलाम्नु शिरीषिका ॥११०॥
टिण्टिनी कफकुष्ठार्शःसन्निपातविषापहा ॥१११॥

अथ अरिष्टक (रीठाकरञ्जः) नामगुणाः।

अरिष्टको गर्भपाती कृष्णबीजश्च फेनिलः।
कृष्णबीजो रक्तबीजः पीतफेनोऽर्थसाधनः ॥११२॥
अरिष्टकस्त्रिदोषघ्न उष्णो गर्भग्रहापहः ॥११३॥

अथ शिंशपाद्वयनामगुणाः।

शिंशपा कपिला कृष्णसारा मण्डलपत्रिका ॥११४॥
अन्या कुशिंशपा भस्म पिङ्गला स्यात् वसादनी ॥११५॥
शिंशपोष्णा हरेत् मेदान् कुष्ठश्वित्रवमिकृमीन्।
बस्तिरुग्व्रणदाहास्रमूढगर्भनिपातनी ॥११६॥

अथ अगस्त्य (वकपुष्प) नामगुणाः।

अगस्त्यो वङ्गसेनाह्वः मधुशिग्रुर्मुनिद्रुमः ॥११७॥
अगस्त्यः पित्तकफजित् निदाघशमनो हिमः ॥११८॥
तत्पुष्पं पीनसघ्नं च पित्तनक्तान्ध्यनाशनः ॥११८॥

यो राज्ञां सुपतिन्नकः कटारमल-
स्तेन श्रीमदनृपेण निर्मितेऽत्र।

यन्येऽभ्युमदनविनोदनाम्नि पूर्णे-
यिचोऽयं ललितपदैर्वटादिवर्गः ॥१२०॥
इति वटादि पञ्चमवर्गः।

—०—

## अथ द्राक्षादिफलवर्गः।

भ्रमोच्छलदर्दरिकापपिष्टं मन्दस्मित वेणुनिनादरम्यम्।
गोपालिकानां करतालिकाभिर्नृत्यत्सतत्परमं स्मरामि ॥१॥

अथ द्राक्षानामगुणाः (तद्भेदाश्च)।

द्राक्षा मधुफला स्वाद्वी हारहूरा फलोत्तमा।
मृद्वीका मधुयोनिश्च रसाला गोस्तनी गुडा ॥ २ ॥
द्राक्षा पक्वा सरा शीता चक्षुष्या बृंहणी गुरुः।
हन्ति तृष्णाज्वरश्वासवातवातास्रकामलाः।
क्षतक्षयास्रपित्तसम्मोहदाहशोषमदात्ययान् ॥ ३ ॥
आमा स्वल्पगुणा गुर्वी सैवाम्ला रक्तपित्तकृत् ॥ ४ ॥
निर्बीर्याऽन्या लघुद्राक्षा गोस्तनी सदृशी गुणैः।
द्राक्षा पर्वतजा लघ्वी साम्ला श्लेष्माम्लपित्तकृत् ॥ ५ ॥

अथ पक्वापक्वशुष्काम्रनामगुणाः।

आम्रश्चूतो रसालश्च सहकारोऽतिसौरभः।
माकन्दः पिकबन्धुः स्यात् कामाङ्गो कामवल्लभः ॥ ६ ॥
आम्रो बाल्ये प्रमेहास्रकफपित्तव्रणान् जयेत्।
तत्फलं बालमत्यम्लं रूक्षं दोषत्रयास्रजित् ॥ ७ ॥
पक्वन्तु मधुरं हृद्यं स्निग्धं हृद्यं बलप्रदम्।
गुरु वातहरं वृष्यं वर्ण्यं शीतमपित्तलम् ॥ ८ ॥
रसस्तस्य सरः स्निग्धो रोचनो बलवर्णकृत् ॥ ९ ॥
सहकारश्च वातघ्नं पित्तघ्नं श्रविनाशनम्।

कर्कन्धु क्षुद्रबदरं बदरञ्च धुकन्धुकम् ॥४३॥
पच्यमानं सुमधुरं सौवीरं बदरं महत् ॥४४॥
बदरं लघु संग्राहि रुच्यमुष्णं समीरजित् ।
कफपित्तकरं तद्वत् कोलं गुरु सरं स्मृतम् ॥४५॥
सौवीरं बदरं शीतं भेदनं गुरु शुक्रलम् ।
बृंहणं पित्तदाहासृक्क्षतक्षयानिलापहम् ॥४६॥
शुष्कं भेद्यग्निकृत् सर्वं लघु तृष्णाक्लमास्रजित् ॥४७॥
कर्कन्धूः मधुरा स्निग्धा गुर्वी पित्तानिलापहा ।
मरुत्पित्तहरो मज्जा तृष्णा वीर्यप्रदा ॥४८॥

अथ क्षीरीनामगुणाः ।

क्षीरी चापि च राजाह्वा राजादनफला तथा ।
राजन्या स्कन्धफलोऽन्याश्च विगुणो मुषिलिन्दकः ॥४९॥
क्षीरीवृक्षफलं शीतं स्निग्धं गुरु बलप्रदम् ।
तृष्णामूर्च्छामदभ्रान्तिक्षयदोषत्रयास्रजित् ॥५०॥

अथ चारनामगुणाः ।

चारो धनुष्पटः शालः प्रियाली मुनिवल्लभः ॥५१॥
चारः पित्तकफास्रघ्नस्तत्फलं मधुरं गुरु ।
स्निग्धं सरं मरुत्पित्तदाहज्वरतृषापहम् ॥५२॥
तन्मज्जा मधुरो वृष्यः शुक्रलः पित्तवातजित् ॥५३॥

अथ परूषकनामगुणाः ।

परूषको मृदुफलः परुषो नीलपर्णोऽपरः ॥५४॥
परूषकं कषायाम्लमामं पित्तकरं लघु ॥५५॥
पक्वन्तु मधुरं पाके शीतं विष्टम्भि बृंहणम् ।
हृद्यं रक्तपित्तदाहज्वरक्षयसमीरनुत् ॥५६॥

अथ तिन्दुकद्वयनामगुणाः ।

तिन्दुकः स्यन्दनः स्फूर्जः कालसारश्च रामकः ।

काकपीलुः कुपीलुः स्यादपरो विषतिन्दुकः ॥५७॥
तिन्दुको व्रणवातघ्नस्तत्सारः पित्तरोगजित् ॥५८॥
आममस्य फलं ग्राहि वातलं शीतलं लघु ॥५९॥
पक्वं पित्तप्रमेहास्रघ्नं श्लेष्मघ्नं विशदं गुरु ॥६०॥
विषतिन्दुकमप्येवं विशेषाद् ग्राहि शीतलम् ॥६१॥

अथ किङ्किणीनामगुणाः ।

किङ्किणी व्याघ्रपादः स्यात् देवदारुः चरः क्वचित् ॥६२॥
किङ्किणी तुवरा तिक्ता पित्तघ्नीपहरा हिमा ॥६३॥
तत्फलं वातलं लामं पक्वं स्वादु त्रिदोषजित् ॥६४॥

अथ आरुकनामगुणाः ।

आरुकं वीरसेन तज्जातिभेदाच्चतुर्विधम् ॥६५॥
आरुकं जारकं वातमेहार्शःकफनाशनम् ॥६६॥

अथ मधूकद्वयनामगुणाः ।

मधूको मधुकस्तोयसारश्च गुडपुष्पकः ।
गोलाफलो मधुष्ठीलो मधुकाष्ठो मधुद्रुमः ॥६७॥
मधूकान्यो जलजन्मो मधुरो दीर्घपत्रकः ॥६८॥
मधुकः कफवातघ्नः कषायो व्रणरोपणः ॥६९॥
तत्पुष्पं मधुरं बल्यं शीतलं गुरु बृंहणम् ॥७०॥
फलं शीतं गुरु स्वादु शुक्रलं वातपित्तजित् ।
अहृद्यं हन्ति तृष्णासृग्दाहश्वासक्षतक्षयान् ॥७१॥

अथ पनसनामगुणाः ।

पनसः कण्टकिफलः श्वासहा गर्भकण्टकः ॥७२॥
पनसं शीतलं पक्वं स्निग्धं पित्तानिलापहम् ।
बल्यं शुक्रप्रदं हन्ति रक्तपित्तक्षतक्षयान् ॥७३॥
आमं तदेव विष्टम्भि वातलं तुवरं गुरु ॥७४॥

कषायं मधुरं हृद्यं गुरुस्निग्धं विशेषतः ॥ १० ॥
पक्वाम्रं जनयेदायुर्मांसशुक्रबलप्रदम् ।
शुष्काम्रन्तु कषायाम्लं भेदनं कफवातजित् ॥ ११ ॥

अथ जम्बूद्वयनामगुणाः ।

महाजम्बू राजजम्बू र्महास्कन्धा बृहत्फला ॥ १२ ॥
क्षुद्रजम्बूर्वीरपत्रा मेघाभा काकवल्लभा ॥ १३ ॥
नादेयी स्यात् क्षुद्रफला तत्फलं जम्बु, जाम्बवम् ॥ १४ ॥
जम्बूः सङ्ग्राहिणी रूक्षा कफपित्तव्रणास्रजित् ॥ १५ ॥
राजजम्बूफलं स्वादु विष्टम्भि गुरु रोचनम् ॥ १६ ॥
क्षुद्रजम्बूफलं तद्वत् विशेषाद्दाहनाशनम् ॥ १७ ॥

अथ नारिकेलनामगुणाः ।

नारिकेलो दृढफलो महावृक्षो महाफलः ।
तृणराजस्तृणफलस्तृणाड्यो दृढबीजकः ॥ १८ ॥
नारिकेलफलं शीतं दुर्जरं वस्तिशोधनम् ।
विष्टम्भि बृंहणं हृद्यं वातपित्तास्रदाहजित् ॥ १९ ॥
तस्याम्भः शीतलं हृद्यं दीपनं शुक्रलं लघु ॥ २० ॥
तत्पादपशिरोमज्जा शुक्रलो वातपित्तजित् ॥ २१ ॥

अथ खर्जूरिकानामगुणाः (तद्भेदाश्च) ।

श्रेणी खर्जूरिकावृक्षः श्रीफला द्वीपसम्भवा ।
पिण्डखर्जूरिका खर्जूदुःप्रधर्षा सुकण्टका ॥ २२ ॥
अन्या स्कन्धफला स्वाद्वी दुरारोहा मृदुच्छदा ।
भूमिखर्जूरिका काककर्कटी स्वादुमस्तका ॥ २३ ॥
खर्जूरिकाफलं शीतं स्वादु स्निग्धं क्षतास्रजित् ।
वल्यं हन्ति मरुत्पित्तं मदमूर्च्छामदात्ययान् ॥ २४ ॥
तस्मादल्पगुणं ज्ञेयमन्यत् खर्जूरिकाफलम् ॥ २५ ॥
तन्मज्जा मूर्द्धजः शीतो हृद्यः पित्तास्रदाहजित् ॥ २६ ॥

अथ सुलेमानीनामगुणाः ।

सुलेमानोऽपरा लोके मृदुला तुवरीफला ॥ २७ ॥
सुलेमानो श्रमभ्रान्तिदाहमूर्च्छास्रपित्तनुत् ॥ २८ ॥

अथ कदलीनामगुणाः ।

कदली ग्रन्थिनो मोचा रम्भा वीरायतच्छदा ।
रोचको वारणवुषाऽम्बुसारांशुमतीफला ॥ २९ ॥
कदली योनिदोषाश्मरक्तपित्तहरा हिमा ॥ ३० ॥
तत्कन्दः शीतलो बल्यः केश्यः पित्तकफासृग्जित् ॥३१॥
तत्फलं मधुरं शीतं विष्टम्भि कफकृद् गुरु ।
स्निग्धं पित्तास्रतृड्दाहक्षतक्षयसमीरजित् ॥ ३२ ॥

अथ दाड़िमीचयनामगुणाः ।

दाडिमो रक्तकुसुमा दन्तबीजा शुकप्रिया ॥३३॥
दाड़िम दीपनं हृद्यं रोचनं नातिपित्तलम् ।
कषायानुरसं ग्राहि स्निग्धं मेदोबलावहम् ॥३४॥
तयोः स्वादु त्रिदोषघ्नमम्लं वातकफापहम् ॥३५॥
स्वाद्वम्लं दीपनं रुच्यं किञ्चित् पित्तकरं लघु ॥ ३६ ॥

अथ कतक (निर्मलीफल) नामगुणाः ।

कतकोऽम्बुप्रसादश्च कतस्तिक्तफलस्तथा ॥३७॥
कतकस्य फलं नेत्र्यं जलनिर्मलताकरम् ।
वातघ्नं मधुरं शीतं मधुरं तुवरं गुरु ॥३८॥

अथ बदरीनामगुणाः तद्भेदाश्च ।

बदरी कर्कटी मोधा कोरण्टो युग्मकण्टका ॥३९॥
अन्या स्निग्धच्छदा कोशफला सौवीरिकाऽपरा ॥४०॥
हस्तिकोलिःपरा त्वन्या लघो कर्कन्धूः कोलिका ॥४१॥
बदरी शीतला तिक्ता रूक्षा पित्तकफापहा ॥४२॥
बदरस्यपरं लोके फेनिलं कुवलं कुहम् ।

कषायं मधुरं हृद्यं गुरुस्निग्धं विशेषतः ॥ १० ॥
पक्वाम्रं जनयेदायुर्मांसशुक्रबलप्रदम् ।
शुष्काम्रन्तु कषायाम्लं भेदनं कफवातजित् ॥ ११ ॥

अथ जम्बूद्वयनामगुणाः ।

महाजम्बू राजजम्बूर्महास्कन्धा बृहत्फला ॥ १२ ॥
क्षुद्रजम्बूर्वीरपत्रा मेघाभा काकवल्लभा ॥ १३ ॥
नादेयी स्यात् क्षुद्रफला तत्फलं जम्बु, जाम्बवम् ॥ १४ ॥
जम्बूः संग्राहिणी रूक्षा कफपित्तव्रणास्रजित् ॥ १५ ॥
राजजम्बूफलं स्वादु विष्टम्भि गुरु रोचनम् ॥ १६ ॥
क्षुद्रजम्बूफलं तद्वत् विशेषाद्दाहनाशनम् ॥ १७ ॥

अथ नारिकेलनामगुणाः ।

नारिकेलो दृढ़फलो महावृक्षो महाफलः ।
तृणराजस्तृणफलस्तृणाढ्यो दृढ़बीजकः ॥ १८ ॥
नारिकेलफलं शीतं दुर्जरं वस्तिशोधनम् ।
विष्टम्भि बृंहणं हृद्यं वातपित्तास्रदाहजित् ॥ १९ ॥
तस्याम्भः शीतलं हृद्य दीपनं शुक्रलं लघु ॥ २० ॥
तत्पादपशिरोमज्जा शुक्रलो वातपित्तजित् ॥ २१ ॥

अथ खर्जूरिकानामगुणाः (तद्भेदाश्च) ।

श्रेणी खर्जूरिकावृक्षः श्रीफला द्वीपसम्भवा ।
पिण्डखर्जूरिका खर्जूर्दुःप्रधर्षा सुकण्टका ॥ २२ ॥
अन्या स्कन्धफला स्वादी दुरारोहा मृदुच्छदा ।
भूमिखर्जूरिका काककर्कटी स्वादुमस्तका ॥ २३ ॥
खर्जूरिकाफलं शीतं स्वादु स्निग्धं क्षताम्रजित् ।
बल्यं हन्ति मरुत्पित्त मदमूर्च्छामदात्ययान् ॥ २४ ॥
तस्मादल्पगुणं ज्ञेयमन्यत् खर्जूरिकाफलम् ॥ २५ ॥
तन्मज्जा मूर्द्धजः शीतो हृद्यः पित्तास्रदाहजित् ॥ २६ ॥

अथ सुलेमानीनामगुणाः।

सुलेमानोऽपरा लोके मृदुला तुवरोफला ॥ २७ ॥

सुलेमानो श्रमभ्रान्तिदाहमूर्च्छास्रपित्तनुत् ॥ २८ ॥

अथ कदलीनामगुणाः।

कदली वारणबुसा रम्भा मोचांशुमत्फला।

रोचको वारणवुषाऽम्बु सारांशुमतीफला ॥ २९ ॥

कदली योनिदोषास्रकफपित्तहरा हिमा ॥ ३० ॥

तत्कन्दः शीतलो बल्यः केश्यः पित्तकफास्रजित् ॥३१॥

तत्फलं मधुरं शीतं विष्टम्भि कफकृद् गुरु।

स्निग्धं पित्तास्रतृड्दाहक्षतक्षयसमीरजित् ॥ ३२ ॥

अथ दाडिमीबयनामगुणाः।

दाडिमो रक्तकुसुमा दन्तबीजा शुकप्रिया ॥३३॥

दाडिमं दीपनं हृद्यं रोचनं नातिपित्तलम्।

कषायानुरसं ग्राहि स्निग्धं मेदोबलावहम् ॥३४॥

तयोः स्वादु त्रिदोषघ्नमम्लं वातकफापहम् ॥३५॥

स्वाद्वम्लं दीपनं रुच्यं किञ्चित् पित्तकरं लघु ॥ ३६ ॥

अथ कतक (निर्मलीफल) नामगुणाः।

कतकोऽम्बुप्रसादश्च कतस्तिक्तफलस्तथा ॥३७॥

कतकस्य फलं नेत्र्यं जलनिर्मलताकरम्।

वातघ्नं श्लेष्महरं शीतं मधुरं तुवरं गुरु ॥३८॥

अथ बदरीनामगुणाः तद्भेदाश्च।

बदरो कर्कटी मोधा कोरण्टो युग्मकण्टका ॥३९॥

धन्या स्निग्धच्छदा कोशफला सौवीरिकाऽपरा ॥४०॥

हस्तिकोलिःपरा त्वन्या लघ्वी कर्कन्धूः कोलिका ॥४१॥

बदरो शोतला तिक्ता रूक्षा पित्तकफापहा ॥४२॥

बदरस्यपरं लोके फेनिलं कुवलं कुहम्।

अथ पालेवतद्वयनामगुणाः ।
पालेवतं सितं पुष्पे स्तिन्दुकश्च फलं स्मृतम् ॥१०४
अन्यत् मानवकं ज्ञेयं महापालेवतं तथा ॥१०५
पालेवतं हिमं स्वादु गुरूष्णं वह्निवातजित् ।
महन्मानवकं हृद्यं तृष्णाघ्नं मिष्टमम्लकम् ॥१०६॥

अथ तूतनामगुणाः ।
तूतं तूदं ब्रह्मकोपं ब्राह्मण्यं ब्रह्मदारु च ॥१०७
तूतं पक्वं गुरु हिमं स्वादु पित्तानिलापहम् ॥१०८

अथ गङ्गेरुनामगुणाः ।
गङ्गेरुकं वार्कटकं कारकं स्तगलिण्डकम् ।
तौदनं क्रन्दनश्चान्यत् स्वगविट्सदृशं तथा ॥१०९
गङ्गेरु रेचनं पक्वं गुरु वातास्रजित् मतम् ।
तौदनं ग्राहि मधुरं वातपित्तहरं लघु ॥११०

अथ तुम्बरुनामगुणाः ।
तुम्बरं टिम्बिकं साम्लमुष्णमाम्लन्तु पिच्छलम् ॥१११॥
मालायनफलैः पत्रैः केसराभैः ससुद्रजैः ।
वृक्षस्तुम्बरको ज्ञेयो भल्लातकसमो गुणैः ॥ ११२॥
तुम्बरं कफजित् पाके कटूष्णं व्रणमेहकृत् ॥११३॥

अथ बीजपूरनामगुणाः ।
बीजपूरो मातुलुङ्गः केशरी फलपूरकः ॥११४॥
बीजपूरफलं रुच्यं रसाम्लं दीपनं लघु ।
रक्तपित्तहरं कण्ठजिह्वाहृच्छोधनं परम् ॥११५॥
तत्त्वांसं बृंहणं शीतं गुरु पित्तसमीरजित् ॥११६॥
केशरं लघु सग्राहि शूलगुल्मोदरापहम् ।
बीजमुष्णं कृमिघ्नं चवातजित्स्रंसदं गुरु ॥११७॥
तत्पुष्पं वातलं ग्राहि रक्तपित्तहरं लघु ॥११८॥

शूलाजीर्णविबन्धेषु मन्दाग्नौ कफमारुते ।
अरुचौ श्वासकासेषु रसस्तस्य प्रशस्यते ॥११९॥

अथ मधुकर्कटीनामगुणाः ।

मधुकर्कटिका स्वादुलुङ्गी घण्टालिका घटा ॥१२०॥
मधुकर्कटिका शीता रक्तपित्तहरा गुरुः ॥१२१॥
तन्मूलन्तु विसूचीघ्नं कर्णशोथविनाशनम् ॥१२२॥

अथ नारङ्गद्वयनामगुणाः ।

नारङ्गो नागरङ्गः स्यात्सोरघो योगसारकः ॥१२३॥
नारङ्गमम्लमत्युष्णं पित्तवातहरं सरम् ॥१२४॥
स्वाद्वम्लमपरं हृद्यं दुर्जरं वातनाशनम् ॥१२५॥

अथ जम्बीरनामगुणाः ।

जम्बीरको दन्तशठो जम्भीरो जम्भलो मतः ॥१२६॥
जम्बीरमम्लं शूलघ्नं गुरूष्णं कफवातजित् ।
आस्यवैरस्यहृत्पीडावह्निमान्द्यक्रमीन् जयेत् ॥१२७॥

अथ अम्लवेतसनामगुणाः ।

आम्लोऽम्लवेतसश्चुक्रो वेतसः शतवेधकः ॥१२८॥
अम्लवेतसमत्युष्णं भेदनं लघु, दीपनम् ।
हृद्रोगशूलगुल्मघ्नं पित्तलट्कफदूषणम् ॥१२९॥

अथ साराम्ल(निम्बुभेद.)नामगुणाः ।

साराम्लकः सारफलो रसालः सारपादपः ॥१३०॥
साराम्लममृवातघ्नं गुरु पित्तकफप्रदम् ॥१३१॥

अथ निम्बूनामगुणाः ।

निम्बूकं निम्बुकं राजनिम्बूकमपरं स्मृतम् ॥१३२॥
निम्बूममम्लं वातघ्नं पाचनं दीपनं लघु ॥१३३॥
राजनिम्बूफलं स्वादु गुरु पित्तसमीरजित् ॥१३४॥

अथ कर्मरङ्गनामगुणाः ।
कर्मरङ्गं नागफलं भव्यं पिच्छिलबीजकम् ॥१३५॥
कर्मरङ्गं हिमं ग्राहि स्वाद्वम्लं कफपित्तजित् ॥१३६॥
अथ अम्लिकानामगुणाः ।
अम्लिका चुक्रिका चिञ्चा तिन्तिडी शुक्तिचन्द्रिका ।
अम्लिकाऽऽमा गुरुर्वातहरा पित्तकफास्रजित् ॥१३८॥
पक्वा तद्वत्सरा रुच्या वह्निवस्तिविशुद्धिकृत् ॥१३९॥
शुष्का हृद्या श्रमभ्रान्तितृष्णाक्लमहरा लघुः ॥१४०॥
अथ तिन्तिडीनामगुणाः ।
तिन्तिडीकन्तु चाम्लमम्लशाकोऽम्लपादपः ॥१४१॥
तिन्तिडीकं समीरघ्नमाममुष्णं परं गुरु ॥१४२॥
तत्पक्वं लघु संग्राहि ग्रहणीकफवातजित् ॥१४३॥
अथ करमर्दीनामगुणाः ।
करमर्दी सुषेणा स्यादन्या कृष्णफला मता ॥१४४॥
करमर्दी गुरूष्णाम्लं रक्तपित्तकफप्रदम् ॥१४५॥
तत्पक्वं मधुरं रुच्यं लघु पित्तसमीरजित् ॥१४६॥
अथ कपित्थनामगुणाः ।
कपित्थको दधिफलः कपित्थः सुरभिच्छदः ॥१४७॥
कपित्थमामं संग्राहि लघु दोषत्रयापहम् ॥१४८॥
पक्वं गुरु तृषाहिक्काशमनं वातपित्तजित् ॥१४९॥
स्वाद्वम्लं तुवरं कण्ठशोधनं ग्राहि दुर्जरम् ॥१५०॥
अथ कपित्थपर्णीनामगुणाः ।
कपित्थपर्णी फणिका सुगन्धा जीवन्तिका ॥१५१॥
कपित्थपर्णी तीक्ष्णोष्णा कफमेहविषापहा ॥१५२॥
अथ आम्रातकनामगुणाः ।
आम्रातकस्त्वाम्रवटः फलो मोदफलः कपिः ॥१५३॥

आम्रातमामवातघ्नं गुरूष्णं रुचिकृत् सरम् ॥१५४॥
पक्वं स्वादु हिमं हृद्यं मरुत्पित्तक्षयास्रजित् ॥१५५॥

अथ राजाम्रनामगुणाः।

राजाम्राह्वं कामनामा कामाङ्गो राजपुत्रकः ॥१५६॥
राजाम्रं मधुरं शीतं ग्राहि पित्तकफापहम् ॥१५७॥

अथ पञ्चाम्लनामगुणाः।

वृक्षाम्लं दाड़िमी चिञ्चा कपित्थं चतुरम्लकम्।
अम्लवेतसवृक्षाम्लदाड़िमीबदरैः क्वचित् ॥१५८॥
वीजपूरयुतैरेतैः पञ्चाम्लमुदितं बुधैः ॥१५९॥

अथ कोशाम्रनामगुणाः।

कोशाम्रको घनस्कन्धो जन्तुवृक्षश्च कोशकः ॥१६०॥
कोशाम्रः कुष्ठशोथास्रपित्तव्रणकफापहः ॥१६१॥
तत्फलं ग्राहि वातघ्नमम्लोष्णं गुरु पित्तलम् ॥१६२॥
पक्वं तत् दीपनं रुच्यं लघूष्णं कफवातजित् ॥१६३॥
मज्जा पित्तश्रमोद्घ्नः स्वादुर्वल्योऽग्निदीपनः ॥१६४॥

अथ पूगीफलनामगुणाः।

क्रमूकं क्रमुकं पूगं पूगीफलमुदाहृतम् ॥१६५॥
पूगं गुरु हिमं रूक्षं कषायं कफपित्तजित्।
मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम् ॥१६६॥
आर्द्रं तद् गुर्वभिष्यन्दि वह्निदृष्टिहरं परम्।
स्निग्धं त्रिदोषहृत्स्वन्नं पक्वं शुष्कन्तु वातलम् ॥१६७॥
पूगं स्याद् दृढ़मध्यं द्दं तद्धि नानाविधं हिमम्।
पाकदेशादिभेदेन विकृतं सर्वदोषनुत् ॥१६८॥
क्रमिकृत् पूगपुष्पन्तु कषायं मधुरं गुरु।
स्निग्धं त्रिदोषहृद् वल्यं तद्वदास्वादकादिकेत् ॥१६९॥

अथ ताम्बूलनामगुणाः ।

ताम्बूलवल्ली ताम्बूली नागिनी नागवल्लरी ॥१३०॥
ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं सरम् ॥१३१॥
तिक्तं चारं हन्ति कासं रक्तपित्तकरं लघु ।
वल्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम् ॥१३२॥

अथ ताम्बूल प्रशंसा ।

ताम्बूलं स्वर्णवर्णं क्रमुकफलयुतं सूक्ष्मसूक्ष्मीकृतं यत् ।
कर्पूरैणाण्डजाभ्यां क्षतखदिरवटीसौरभेणापि पूर्णम् ॥
चूर्णं सुक्तानुजातं शिशिरकिरणवत् प्रोज्ज्वलं तेन साकम् ।
दत्त्वा विप्राय पूर्वं तदनु नरपतिर्भक्षयेदासदत्तम् ॥१३३॥

अथ संयोगतःचूर्णखदिरगुणाः ।

चूर्णं वातानिलहरं खदिरं कफपित्तजित् ।
संयोगतो दोषहरं सौमनस्यं करोति च ।
मुखवैरस्यसौगन्ध्यकान्तिशोभाकरं परम् ॥१३४॥

अथ लवलीनामगुणाः ।

सुगन्धमूला लवली पाण्डुः कोमलवल्कल ॥१३५॥
लवल्याः फलमुद्दिष्टं श्यामं ज्योत्स्नाफलं तथा ॥१३६॥
लवलीफलमम्लार्शोवातपित्तहरं गुरु ।
विशदं रोचनं रूक्षं स्यादम्लं तुवरं रसे ॥१३७॥

तत्र परिभाषा ।

फलं तुल्यगुणं सर्वं मज्जानमपि निर्दिशेत् ॥१३८॥
फलं हिमाग्निदुर्वातव्यालकीटादिदूषितम् ।
अकालजातं नाश्नीयात् पाकातीतं कुभूमिजम् ॥१३९॥
आम दोषकरं प्राय फलं विल्वं विनाखिलम् ॥१४०॥
यस्य यस्य फलस्येह वीर्यं भवति यादृशम् ।
तस्य तस्यैव वीर्यं च मज्जानमपि निर्दिशेत् ॥१४१॥

व्याधितं कृमिसंजुष्टं पाकातीतमकालजम् ।
वर्जनीयात् प्रयत्नेन तथा पर्युषितं च यत् ॥१८२॥

इति द्राक्षादिफलवर्गः षष्ठः समाप्तः ।

---

## अथ कुष्माण्डादिशाकवर्गः ।

राधापदाब्जे निपतन् विनोदी
मानापनुत्यै जगदेकवन्द्यः ।
केनापि कामेन स गोपरूपी
पायादपायात् पुरुषः पुराणः ॥ १ ॥

अथ शाकनिरूपणम् ।

शाकं चतुर्धा तत्पुष्पच्छदकन्दफलैः स्मृतम् ॥ २ ॥
सर्वशाकेषु जीवन्ती श्रेष्ठा निम्बस्तु सर्वथः ॥ ३ ॥

अथ कुष्माण्डनामगुणाः ।

कुष्माण्डको पुष्पफलो पचनालिश्चतुर्विधः ।
कर्कारुफलाकन्दो स्यादारूराजकर्कटी ॥ ४ ॥
कुष्माण्डं बृंहणं शीतं गुरु पित्तास्रवातजित् ॥ ५ ॥
बालं पित्तापहं शीतं मध्यमं कफकारकम् ॥ ६ ॥
पक्वं नातिहिमं स्वादु सक्षारं दीपनं लघु ।
वस्तिशुद्धिकरं चेतोरोगदोषभयापहम् ॥ ७ ॥
कुष्माण्डं नातिमधुरं वातास्मरिकफापहम् ।
तन्मज्जा पित्तनुद् वृष्यो मधुरो वस्तिशोधनः ॥ ८ ॥

अथ कर्कटी(काँकुड़)नामगुणाः ।

कर्कटी लोमशा व्यालपत्रैर्वारुर्हस्तफला ॥ ९ ॥
कर्कटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः ।
रुच्या पित्तहरा आमा पक्वोष्णा पित्तवह्निकृत् ॥ १० ॥
कर्कटं शीतलं ग्राहि रक्तपित्तहरं गुरु ।

पक्वं पित्ताग्निजननं सक्षारं श्लेष्मवातजित् ॥ ११ ॥

अथ कालिङ्ग(तरमुज)नामगुणाः ।

कालिङ्गं कृष्णबीजं स्यात् कालिङ्गं फलवर्त्तुलम् ॥ १२ ॥
कालिङ्गं ग्राहि दृक्पित्तशुक्रघ्नं शीतलं गुरु ।
पक्वन्तु सोष्णं सक्षारं पित्तलं कफवातजित् ॥ १३ ॥

अथ मिष्टतुम्बी(लाउ)नामगुणाः ।

तुम्बीमिष्टा महातुम्बी राजालाबुरलाबुनी ॥ १४ ॥
मिष्टतुम्बीफलं हृद्यं कफपित्तहरं गुरु ॥ १५ ॥

अथ कटुतुम्बीनामगुणाः ।

कटुतुम्बी पिण्डफला राजपुत्री च तुम्बिनी ॥ १६ ॥
कटुतुम्बी हिमा हृद्या पित्तकासविषापहा ॥ १७ ॥

अथ त्रपुष(शसा)नामगुणाः ।

त्रपुषं कण्टकिलता सुधावासोऽपरं कटुः ।
छर्दिपर्णी मूत्रफला पित्तकं हस्तिपर्णिनी ॥१८॥
त्रपुषं मूत्रलं शीतं रूक्ष पित्तास्रकृच्छ्रनुत् ।
तत्पक्वमुष्णमम्लं स्यात् पित्तलं कफवातजित् ॥१९॥

अथ चिर्भट(गोमुक्)नामगुणाः ।

चिर्भटं धेनुदुग्धं स्यात् ज्ञेयं गोरक्षकर्कटी ॥२०॥
चिर्भटं मधुरं रूक्षं गुरु पित्तकफापहम् ।
शीत विष्टम्भि संग्राहि पक्वमुष्णञ्च पित्तलम् ॥२१॥

अथ वालुक(फूटी)नामगुणाः ।

वालुकं काण्डकं वालु तच्छीतं मधुरं गुरु ।
रक्तपित्तहरं भेदि लघूष्णं पक्वमग्निकृत् ॥२२॥

अथ शीर्णवृन्तनामगुणाः ।

शीर्णवृन्तं चित्रफलं विचित्रं पीतवर्णकम् ॥२३॥
शीर्णवृन्तं लघु स्वादु भेद्युष्णं वह्निपित्तकृत् ॥२४॥

अथ कोशातकी(झिञ्ञा)नामगुणाः ।
कोशातकी कृतच्छिद्रा जालिनी कृतवेधना ।
मृदङ्गफलिनी क्ष्वेड़ा घण्टाली कर्कशच्छदा ॥२५॥
कोशातकी लघुस्त्निग्धा रूक्षामाशयशोधनी ।
शोफपाण्डूदरप्लीहकुष्ठार्शःकफपित्तजित् ।
तत्फलं भेदनं शीतं लघु मेहत्रिदोषजित् ॥२६॥

अथ राजकोशातकीनामगुणाः ।
राजकोशातकी मिष्टा महाजालिः सपीतका ॥२७॥
राजकोशातकी शीता ज्वरघ्नी कफवातला ॥२८॥

अथ महाकोशातकी(धुन्दुल)नामगुणाः ।
महाकोशातकी त्वन्या हस्तिघोषा महाफला ॥२९॥
महाकोशातकी स्निग्धा मिष्टा पित्तानिलापहा ॥३०॥

अथ वृन्ताकी(बैगुण)नामगुणाः ।
वृन्ताकी वार्त्ताकी वार्त्ता भण्टाकी भण्टिका मता ॥३१॥
वृन्ताकं स्वादु तीक्ष्णोष्णं कटुपाकञ्च पित्तलम् ।
कफवातहरं हृद्यं दीपनं शुक्रलं लघु ।
ज्वरारोचककासघ्नं पक्वं तत् पित्तलं गुरु ॥३२॥

अथ श्वेतवार्त्ताकुनामगुणाः ।
अपरः श्वेतवार्त्ताकुः कुक्कुटाण्डफलोपमः ।
तस्माद्धीनगुणः किञ्चिदर्शसाञ्च हितः स्मृतः ॥३३॥

अथ बिम्बी(तेलाकुचा)नामगुणाः ।
बिम्बी रक्तफला शोभा तुण्डी दन्तच्छदोपमा ॥३४॥
बिम्बी शान्तिप्रदा हन्ति रक्तपित्तासृक्षामलाः ।
तत्फलं शीतलं स्वादु गुरु पित्तास्रदाहजित् ।
स्तम्भनं लेखनं रुच्यं विबन्धाध्मानकारकम् ॥३५॥

अथ कारवेल्ल(करला)नामगुणाः ।

कारवेल्लं कटिल्लं स्यात्सुषवी च सुकाण्डकम् ।
कारवल्ली वारिवल्ली ह्रस्वकारवेल्ला स्मृता ॥३६॥
कारवेल्लं हिमं भेदि लघु तिक्तमवातलम् ।
पित्तास्रकामलापाण्डुकफमेहकृमीन् जयेत् ॥३७॥

अथ कर्कोटकीनामगुणाः ।

कर्कोटकी पीतपुष्पा महाजाली निगद्यते ॥३८॥
तद्वत् कर्कोटकं पुष्पं ह्रासास्वविनाशनम् ॥३९॥

अथ वन्ध्याकर्कोटकी(तितुवाँकरोल)नामगुणाः ।

वन्ध्याकर्कोटकी देवी नागारिर्विषकण्टका ॥४०॥
वन्ध्याकर्कोटकी तीक्ष्णा विषविसर्पकासजित् ॥४१॥

अथ डोडिकानामगुणाः ।

डोडिका विषमुष्टिः स्याद् विषघ्टिः सुमुष्टिका ॥४२॥
डोडिका कफपित्तार्शः कृमिगुल्मविषापहा ॥४३॥

अथ डिण्डिश(ट्यौंडस)नामगुणाः ।

डिण्डिशो रोमशफलो डिण्डिशो मुनिनिर्मितः ॥४४॥
डिण्डिशो वातलो रूक्षो मूत्रलोऽश्मरिभेदकः ॥४५॥

अथ कोलशिम्बी(कटूासिम्)नामगुणाः ।

कोलशिम्बी कृष्णफला खट्वा शूकरपादिका ॥४६॥
कोलशिम्बी समीरघ्नी गुर्वामकफपित्तकृत् ॥४७॥

अथ शिम्बीनामगुणाः ।

शिम्बी कुशिम्बी कुक्षाहशिम्बी पुस्तकर्मशिम्बिका ॥४८॥
शिम्बी शीता गुरुर्बल्या श्लेष्मना वातपित्तजित् ॥४९॥

अथ वास्तुक(बिलोआक)नामगुणाः ।

वास्तुकः शाकपत्रः स्यात् क्षारश्च प्रसादकः ॥५०॥
वास्तुकः पाचनो रुच्यो लघुः शुक्रबलप्रदः ।

सरः श्लेष्मास्रपित्तार्शः क्रमिदोषत्रयापहः ॥५१॥

अथ जीवन्तनामगुणाः।

जीवन्तकः शाकवीरो रक्तनालः प्रनालकः ॥५२॥
जीवन्तो वातहृत् क्षारः स्वादुपाक स्त्रिदोषनुत् ॥५३॥

अथ चिल्लीनामगुणाः।

चिल्ली सरा लघुः शीता रूक्षा मेध्याग्निदीपनी।
वल्या रूक्षा हरेत् प्लीहरक्तदोषत्रयक्रमीन् ॥५४॥

अथ कालचञ्चुशाकनामगुणाः।

कालशाकं कालिका स्यात् चुञ्चुका चुञ्चुकोऽपरः ॥५५॥
कालशाकं सरं रुच्यं वातलं कफशोफजित् ॥५६॥
कच्यं पवित्रमायुष्यं नातिपित्तप्रकोपणम् ॥५७॥
चुञ्चुः शीता सरा रूक्षा स्वाद्वी दोषत्रयापहा ॥५८॥

अथ तण्डुलीयद्वय(नटे)नामगुणाः।

तण्डुलीयो मेघनादः भण्डीरस्तण्डुलीयकः ॥५९॥
विषघ्नः कचटोऽन्यः स्यात् मारीषो मार्षिकस्तथा ॥६०॥
तण्डुलीयो लघुः शीतो रूक्षः पित्तकफास्रजित्।
सृष्टमूत्रमलो रुच्यो दीपनो रक्तपित्तहा ॥६१॥
मारिषो रेचनः शीतो गुरुर्मदस्त्रिदोषजित् ॥६२॥

अथ फोगनामगुणाः।

फोगो मरुद्भवः शृङ्गी सूक्ष्मपुष्पः शशादनः ॥६३॥
फोग संग्राहकः शीतो रक्तपित्तकफापहः ॥६४॥

अथ पटोलनामगुणाः।

पटोलः पाण्डुको राजी कुलकः कर्कशच्छदः।
राजिफलः पाण्डुफलो राजिमानमृताफलम् ॥६५॥
*तिक्तोत्तमा बीजगर्भाऽमरा राजपटोलिका।*
ज्योत्स्नी पटोलिका जाली नादेयी भूमिजम्बुका ॥६६॥

पटोलं पाचनं हृद्यं हृष्यं लघ्वग्निदीपनम्।
स्निग्धोष्णं हन्ति कासास्रज्वरदोषत्रयक्रमीन् ॥६७॥
पत्रं पित्तहरं शीतं तस्य वल्ली कफापहा।
मूलं विरेचनं प्रोक्तं फलं दोषत्रयापहम् ॥६८॥

अथ चचुड़ड़नामगुणाः।

चचुडो वेत्रकूलोऽन्यः श्वेतराजी बृहत्फला ॥६९॥
किञ्चिन्न्यूनगुणस्तस्मात् विशेषात् शोषणे हितः ॥७०॥

अथ पालक्या(पालङ्)नामगुणाः।

पालक्या वास्तुकाकारा क्षुरिका चीरितच्छदा ॥७१॥
पालक्या वातला शीता भेदिनी श्लेष्मला गुरुः।
विष्टम्भिनी मदश्वासरक्तपित्तकफापहा ॥७२॥

अथ पोतकीनामगुणाः।

पोतक्युपोदिका सोक्ता मत्स्यकाली सुरङ्गिका ॥७३॥
पोतकी शीतला स्निग्धा श्लेष्मला वातपित्तजित्।
अकण्ठ्या पिच्छिला निद्राशुक्रदा रक्तपित्तनुत्।
बलदा रुचिकृत् पथ्या बृंहणी तृप्तिकारिणी ॥७४॥

अथ लोणी-कुटीरनामगुणाः।

लोणिकोक्ता बृहल्लोटी कुटिरस्तु कुटिञ्जरः।
दुन्दुरः स्यात् गुडोरीकः पिण्डी पिण्डीतकस्तथा ॥७५॥
लोणी रूक्षा गुरुः शीता सरा विष्टम्भिनी पटुः।
दीपना मधुरा पाके तद्वत् कुटीरकस्त्वगुरु ॥७६॥
लोणिका वातला श्वासकासमेहविषापहा ॥७७॥

अथ सुनिषण्ण तिलपर्णीनामगुणाः।

सुनिषण्णः स्वस्तिकः स्यात् यमदग्नितिलपर्णिका ॥७८॥
सुनिषण्णो हिमो ग्राही मोहदोषत्रयापहः ॥७९॥
तिलपर्णी हिमा रूक्षा ग्राहिणी कफपित्तजित् ॥८०॥

अथ सूक्ष्मपत्रनामगुणाः।

सूक्ष्मपत्रस्तीक्ष्णशाको धनुःपुष्पः सुबोधकः ॥८१॥
चौरकः कफवातघ्नः सुतीक्ष्णो नातिपित्तलः ॥८२॥

अथ टुटुकनामगुणाः।

टुटुको विटपी रूक्षः खरपत्रस्वरण्डजः ॥८३॥
टुटुको वातलो रूक्षो विष्टम्भी कफनाशनः ॥८४॥

अथ वस्तिजनामगुणाः।

घनागमभवा वल्ली प्रसिद्धो नाम वस्तिजः ॥८५॥
घनागमे त्रिदोषघ्नस्तत्पुष्पं मधुरं सरम् ॥८६॥
फलं तस्य सरं हृद्यमाम मिष्टन्तु वातलम् ॥८७॥

अथ शीतवार नाडीशाकगुणाः।

शीतवारः कुरण्डी स्यान्नाडी तु नलिकाऽपरा ॥८८॥
शीतवारः सरो हृद्य· शोथघ्नो वातपित्तलः ॥८९॥
नाडी सरा लघु· शीता पित्तनुत् कफवातला ॥९०॥

अथ सार्षप-कौसुम्भनामगुणा।

सार्षपं सर्षपोद्भूतं कौसुम्भं कुसुमोद्भवम् ॥९१॥
सार्षपं बहुविण्मूत्रं गुरूष्णं च त्रिदोषकृत् ॥९२॥
कौसुम्भं स्वादु रूक्षोष्णं कफजित् पित्तल लघु ॥९३॥

अथ चणकनामगुणा।

चणकं शाकमुद्दिष्टं दुर्जरं कफवातकृत् ॥९४॥

अथ कलायनामगुणा।

कलायशाकं भेदि स्यात् लघु पित्तकफापहम् ॥९५॥

अथ चाङ्गेरी(चामरूल)नामगुणा.।

चाङ्गेरी त्वाम्लिका चुक्रा सुद्राम्लिका चतुश्छदा ॥९६॥
चाङ्गेरी दीपनी रूच्या लघ्वुष्णा कफवातजित्।
सपित्तला ग्रहण्यर्शःकुष्ठातीसारनाशिनी ॥९७॥

अथ कासमर्द-गृञ्जननामगुणाः।

कासमर्दः कर्कशः स्याद् गृञ्जनो गर्जरस्तथा ॥९८॥
कासमर्दो लघुः कण्ठ्यः कासदोषविषास्रजित् ॥९९॥
गृञ्जनः कटुकस्तीक्ष्णस्तिक्तोष्णो दीपनो लघुः ॥१००॥
संग्राही रक्तपित्तार्शोग्रहणीकफवातजित् ॥ १०१॥

अथ मूलकनामगुणाः।

मूलकं हस्तिदन्तश्च बालमूलं कफान्तकम् ॥ १०२॥
मूलकं वातलं रुच्यं सर्वोष्णं पाचनं लघु।
हन्ति त्रिदोषजं श्वासगदाक्षिगलपीनसम् ॥१०३॥
स्नेहसिद्धं तदेव स्यात् दोषत्रयविनाशनम् ॥१०४॥
शुष्कं तत् हि विशोथघ्नं लघु दोषत्रयापहम् ॥१०५॥
तत्पुष्पं श्लेष्मपित्तघ्नं फलं वातकफापहम् ॥१०६॥

अथ करीरनामगुणाः।

करीरको गूढपत्रः क्रकचो ग्रन्थिलो मतः ॥१०७॥
करीरः कटुको भेदी तीक्ष्णोष्णः कफवातजित्।
व्रणशोथविषार्शोघ्नः तत्पुष्पं कफपित्तजित् ॥१०८॥
फलं ग्राहि कषायोष्णं मधुरं श्लेष्मपित्तकृत् ॥१०९॥

अथ शोभाञ्जनद्वयनामगुणाः

शिग्रुः शोभाञ्जनः कृष्णगन्धः स्याद् बहुलच्छदः ॥११०॥
रक्तोऽन्यो मधुशिग्रुस्तु श्वेतोऽन्यो हरितच्छदः ॥१११॥
तद्बीजं श्वेतमरिचं तीक्ष्णोष्णं चक्षुषे हितम् ॥११२॥
शिग्रुस्तीक्ष्णो लघुर्ग्राही वह्निदः कफवातजित्।
कटूष्णो विद्रधिप्लीहव्रणघ्नो रक्तपित्तकृत् ॥११३॥
मधुशिग्रुर्गुणैस्तद्वद्विशेषाद् दीपनः सरः ॥११४॥
तत्पुष्पं लघु संग्राहि वातलं कफशोथजित् ॥११५॥

फलं ग्राहि कषायोष्णं मधुरं श्लेष्मपित्तहृत् ॥११६॥

अथ लशुनद्वयनामगुणाः ।

लशुनः स्यादुग्रगन्धो यवनेष्टो रसोनकः ॥११७॥
गृञ्जनोऽन्यो महाकन्दो जर्जरो दीर्घपत्रकः ॥११८॥
लशुनो बृंहणो वृष्यः स्निग्धोष्णः पाचनः सरः ।
भग्नसन्धानकृत् तीक्ष्णो गुरुः पित्तास्रवृद्धिदः ॥११९॥
रसायनं कफश्वासकासगुल्मज्वरारुचीः ।
हन्ति शोथप्रमेहार्शःकुष्ठशूलानिलक्रमीन् ॥१२०॥
तत्पत्रं मधुरं क्षारं नालो मधुरपित्तलः ॥१२१॥
गृञ्जनः पित्तलो ग्राही तीक्ष्णोऽर्शोरोगनाशनः ॥१२२॥
गन्धाकृतिरसैस्तुल्यः सूक्ष्मनालः पलाण्डुवत् ॥१२३॥

अथ पलाण्डुनामगुणाः ।

पलाण्डुर्यमलाख्यश्च दुर्गन्धो मुखदूषकः ॥१२४॥
पलाण्डुस्तद्गुणैस्तुल्यः कफकृत् नातिपित्तलः ।
हरते केवलं वातं स्वादु पाके रसान् जयेत् ॥१२५॥

अथ शूरणत्रयनामगुणाः ।

शूरणः कन्दलः कन्दो गुदामयहरोऽपरः ॥१२६॥
वज्रकन्दः सुरेन्द्रः स्यात् वन्योऽन्यथिषकन्दकः ॥१२७॥
शूरणो दीपनो रूक्षः कषायः कण्डुकृत् कटुः ।
विष्टम्भी विशदो रुच्यः कफार्शःकृन्तनो लघुः ॥१२८॥
नालं शूरणकं रुच्यं कफवातहरं लघु ।
अर्शसां तु विशेषेण हितं कामाग्निदीपनम् ॥१२९॥
तद्वत् वन्यो वज्रकन्दः कफघ्नः पित्तरक्तकृत् ॥१३०॥

अथ अस्थिशृङ्खलिकानामगुणाः ।

अस्थिशृङ्खलिका वल्ली ग्रन्थिमानस्थिसंहतिः ॥१३१॥
अस्थिशृङ्खलिका रुच्या श्लेष्मला मधुरा हिमा ।

अस्थिसन्धानकृद् बल्या पित्तरक्तानिलापहा ॥१३२॥

अथ वाराही(शूकरकन्द)नामगुणाः ।

वाराही माधवी व्यष्टिस्तत्कन्दः शौकरो किटिः ॥१३३॥
वाराही पित्तला बल्या स्वाद्वी तिक्ता रसायनी ।
आयुःशुक्राग्निकृत् मेहकफकुष्ठानिलापहा ॥१३४॥

अथ मुसलीनामगुणाः ।

मुसली तालपत्री स्यात् खलिनी तालमूलिका ॥१३५॥
मुसली बृंहणी बल्या वीर्य्योष्णार्शोऽनिलापहा ॥१३६॥

अथ कशुकनामगुणाः ।

कशुका पीलुनी पीलुः फेलुका दलशालिनी ॥१०७॥
कशुकं वातलं ग्राहि दीपनं कफपित्तनुत् ॥१३८॥

अथ भूच्छत्रनामगुणाः ।

भूच्छत्रं पृथिवीकन्दः शिलीन्ध्रं शलकं मतम् ॥१३९॥
भूच्छत्रं शीतलं वर्ण्यं गुरु भेदि त्रिदोषजित् ॥१४०॥

अथ स्थूलकन्द(कचु)-मानकन्दनामगुणाः ।

स्थूलकन्दो ग्राम्यकन्दो मानकन्दो महच्छदः ॥१४१॥
स्थूलकन्दो गुरुः श्लेष्मवातलः पित्तशोथजित् ।
मानकः शीतलः स्वादुः पित्तरक्तहरो गुरुः ॥१४२॥

अथ कसेरुक-शृङ्गाटनामगुणाः ।

कसेरुकं सम्पकन्दं तृणद्राजकसेरुकम् ॥१४३॥
शृङ्गाटो जलकन्दः स्यात् त्रिकोणस्त्रिकटः खुरः ॥१४४॥
कसेरुकं हिमं स्वादु गुरु पित्तास्रदाहजित् ।
ग्राहि पित्तानिलघ्नं च सदं शृङ्गाटकं तथा ॥१४५॥

अथ पिण्ड मध्व शङ्ख-काष्ठ-हस्त-रक्तालुनामगुणाः ।

पिण्डालुकं तथा गन्धः मध्वालु स्यात् तु रोमशम् ।
शङ्खालुर्विषशङ्खाख्यं काष्ठालुः सम्यजातकम् ॥१४६॥

हस्तालुकं महत्काष्ठं रक्तकन्दं महत्फलम् ॥१४७॥
आलुकं शीतलं सर्वं विष्टम्भि मधुरं गुरु।
सृष्टमूत्रमलं रूक्षं दुर्जरं रक्तपित्तजित्।
कफानिलकरं बल्यं हृद्यं स्तन्यविवर्द्धनम् ॥१४८॥
पिण्डालुकमभिष्यन्दि तिक्तोष्णं दोषलं गुरु ॥१४९॥
मध्वालुकं पित्तकरं कटु पाके कफापहम् ॥१५०॥

। अथ केयूरनामगुणाः।

केयूरं खल्पविटपं कन्दलः स्वादुकन्दलः ॥१५१॥
केयूरं शीतलं ग्राहि पित्तलं कफवातजित् ॥१५२॥

अथ परिभाषा।

अतिजीर्णमकालोत्थं रूक्षं स्निग्धमभूमिजम्।
शुष्कं शाकञ्च सकलं नाश्नीयात् मूलकैर्विना ॥१५३॥

यो राज्ञां सुखतिलकः कटारमल्ल-
स्तेन श्रीमदननृपेण निर्मितेऽत्र।
ग्रन्थेऽभूत् मदनविनोदनाम्नि पूर्णः
कुष्माण्डप्रभृतिरयञ्च शाकवर्गः ॥१५४॥

इति कुष्माण्डादिशाकवर्गः सप्तमवर्गः।

—०—

## अथ पानीयादिवर्गः।

करेण संगृह्य कुचौ कपोले मावाङ्गुलीभिर्दुताद्यमानम्।
मुक्ताम्बराजानुयसेन यान्तं नमामि कृष्णं नवनीतचौरम् ॥ १ ॥

अथ पानीयनामगुणाः।

पानीयं जीवनं नीरं कीलालममृतं जलम्।
आपोऽम्भस्तोयमुदकं पाथोऽम्बु सलिलं पयः ॥ २ ॥

पानीयं शीतलं हृद्यं हन्ति पित्तविषभ्रमम्।
दाहाजीर्णश्रमच्छर्दिमदमूर्च्छामदात्ययान् ॥ ३ ॥
शीतलं स्तिमिते कोष्ठे गलरोगे नवज्वरे।
प्रत्ययोपीनसाध्मानहिक्कागुल्मेषु विद्रधौ ॥ ४ ॥
कासमेहारुचिश्वासपाण्डुवातामयेषु च।
पार्श्वशूले स्नेहपीते सद्यः शुद्धौ न शस्यते ॥ ५ ॥
दिव्यं तुषारजं धारं कारि हैममिति स्मृतम्।
चतुर्विधं वरं धारं लघुत्वात् तत् पुनर्द्विधा ॥ ६ ॥
गाङ्गं सामुद्रजञ्चेति गाङ्गं श्रेष्ठतमं स्मृतम्।
आश्विने मासि सामुद्रं गुणैर्गाङ्गवदाचरेत् ॥ ७ ॥
स्थापिते हैमजे पात्रे राजते मृण्मयेऽपि वा।
तज्जलं शीतलं श्रेयं दोषत्रयविषापहम् ॥ ८ ॥
तद्गाङ्गं सर्वदोषघ्नं पेयं सामुद्रमन्यथा।
सक्षारं लवणं मिश्रं शुक्रदृष्टिबलापहम् ॥ ९ ॥
सौम्यं रसायनं दिव्यं मोहनिद्राविदोषजित्।
पाचनञ्च व्यथामूर्च्छातन्द्रादाहक्लमापहम् ॥ १० ॥
आश्वासजननं ह्लादि श्रमभ्रमतिवुहिहृत्।
तदेव भूमिपतितं भौममित्यभिधीयते ॥११॥
दिव्याभावे तु तत् तोयं प्रविचार्य्या गुणागुणाः ॥१२॥
कौप श्लेष्महरं क्षारं पित्तघ्नं दीपनं लघु ॥१३॥
ताडागं वातलं स्वादु तुवरं कटुपाकि च ॥१४॥
वाप्यं पित्तकरं क्षारं कटु वातकफापहम् ॥१५॥
नैर्झरं लेखनं हृद्यं कफघ्नं दीपनं लघु ॥१६॥
ह्रादञ्च लघु पित्तघ्नमविदाहाग्निदीपनम् ॥१७॥
चौण्ड्यमग्निप्रदं रूक्षं स्वादु श्लेष्महरं लघु ॥१८॥
मादेयं दीपनं रूक्षं वातलं लघु लेखनम् ॥१९॥

धारसं मधुरं वल्यं तृष्णाघ्नं तुवरं लघु ॥२०॥
केदारं स्वादभिष्यन्दि विपाके गुरु दोषलम् ॥२१॥
पाल्वलं तद्वदुद्दिष्टं विशेषात् सर्वदोषकृत् ।
तौषारं वातलं शीतं रूक्षं पित्तकफापहम् ॥२२॥
धारं भूमावपतितं दिव्यं तत् सर्वदोषनुत् ॥२३॥
नैर्झरं गुरु वै प्रोक्तं विषदं कफवातनुत् ॥२४॥
हैमं गुरुतरं शीतं पित्तनुद् वातवर्द्धनम् ॥२५॥
चन्द्रकान्तजलं रूक्षं लघु पित्तविषास्रनुत् ॥२६॥
दिवा रविकरैर्जुष्टं निशि शीतकरांशुभिः ।
श्रेयं हंसोदकं नाम स्निग्धं दोषत्रयापहम् ॥२७॥
अनभिष्यन्दि निर्दोषमन्तरिक्षजलोपमम् ।
बल्यं रसायनं मेध्यं शीतं लघु सुधोपमम् ॥२८॥
वर्षासु दिव्यं पानीयमौद्भिदं वा प्रशस्यते ।
शरत्प्रसन्नमुदकमगस्त्योदयनिर्विषम् ॥२९॥
हेमन्ते सारसं तोयं ताडागं वा गुणावहम् ।
वसन्तग्रीष्मयोः कौप्यं चाप्यं नैर्झरमेव च ॥३०॥
प्रावृषि प्रवरं चौण्ड्यं मलविष्टम्भकारि च ॥३१॥
नद्यः शीघ्रवहाः लघ्व्यः सर्वा याश्चामलोदकाः ।
मन्दगाः कलुषा गुर्व्यो याश्च शैवालसेविताः ।
हिमवत्प्रभवा पथ्या नद्योऽश्माहतवायसः ॥३२॥
गङ्गागतद्रुसरयुयमुनाद्या गुणोत्तमाः ।
ईषत्पित्तकराः स्वच्छाः पुष्या वातकफापहाः ॥३३॥
मलयाचलजा नद्यो लघ्व्यः शीघ्रवहा हिताः ॥३४॥
कृतमाला ताम्रपर्णीप्रमुखा विमलोदकाः ॥३५॥
स्थिरापस्तु प्रभावा ये कुर्वन्ति श्लीपदापचीः ।
शीर्षपादशिरःकण्ठगलरोगार्बुदक्रमीन् ॥३६॥

सद्यः शैलभवा नद्यो वेणीगोदावरीमुखाः ।
कुर्वन्ति प्रायशः कुष्ठमोपद्यातकफापहाः ॥३७॥
विन्ध्याचले भवाः शिप्रारेवाद्याः पाण्डुकुष्ठदाः ॥३८॥
पारियात्रोद्भवाः प्रोक्ता द्विधा चर्मण्वतीमुखाः ॥३९॥
पथ्यास्तड़ागजास्तत्र त्रिदोषघ्नो बलापहाः ॥४०॥
दरीजाः कुष्ठकं वह्निश्लेष्मश्लीपदरोगदाः ॥४१॥
प्राच्यावन्त्यपराः पश्चात् गुदजानि प्रकुर्वते ॥४२॥
मलजा मधुरा बल्या लघवोऽग्निप्रदाः परम् ॥४३॥
पश्चिमाम्भोधिपतिताः गोमतीनर्मदादयः ।
पथ्या वातास्रपित्तघ्नो बल्याः कण्डूकफापहाः ॥४४॥
दक्षिणाब्धिगता बल्याः पित्तघ्नः कफवातदाः ॥४५॥
पूर्वाम्भोधिवहा नद्यो मन्दगा गुरवो घनाः ॥४६॥
भौमानामम्भसां प्रातः सर्वेषां ग्रहणं वरम् ।
नैर्मल्यं तत्र शैत्यं तत्तेषां स च परो गुणः ॥४७॥
भुक्तादौ सलिलं पीतं कार्श्यं मन्दाग्निदोषकृत् ।
मध्येऽग्निदीपनं श्रेष्ठमन्ते स्थौल्यकफप्रदम् ॥४८॥
जीवन्ति जीवनात् जीवा जगत् सर्वन्तु तन्मयम् ।
अतोऽत्यन्ततया सुप्रैर्न क्वचिद्वारि वार्य्यते ॥४९॥
पानीयं प्राणिनां प्राणा विश्वमेव हि तन्मयम् ।
अतोऽत्यन्तनिषेधेऽपि न क्वचिद् वारि वार्य्यते ॥५०॥
अजीर्णे कथितं चामे पक्वे जीर्णे च तद्वरैः ॥५१॥
तृषितस्तु विदग्धेऽन्ने यः पिबेत् शीतलं जलम् ।
विदाहः प्रशमं याति शेषमन्नञ्च जीर्य्यते ॥५२॥
आकूपं दोषकृद्वारि प्रायोऽभिष्यन्दि निन्दितम् ॥५३॥
जाङ्गलं हन्ति सकलं दोषमग्निप्रदीपनम् ॥५४॥
साधारणं हिमं स्वादु तृष्णाघ्नं हर्षदं लघु ॥५५॥

वर्षासु योऽवगाहेत पिबेदथ नवं पयः ।
वर्षादिदुष्टं लभते स बाह्याभ्यन्तरामयान् ॥५६॥
कलुषं छन्नमम्भोजपर्णनीलीतृणादिभिः ।
दुष्टगन्धाद्यसंस्पृष्टं सूर्याचन्द्रमसांशुभिः ॥५७॥
व्यापन्नमिति जानीयात् सर्वदोषप्रकोपकृत् ।
तोयं तद्वर्जयेत् सर्वं यथामर्त्तुसमुद्भवम् ॥५८॥
अव्यापन्नमिति पानीयं क्वथितं सूर्यतापितम् ।
तप्तायः सूर्यसिकताग्रावादिष्वथ धारितम् ॥५९॥
कर्पूरपूरपुन्नागपाटलादिसुवासितम् ।
स्वच्छं कनकमुक्ताद्यैः प्रोक्तं दोषाय न क्वचित् ॥६०॥
तत् क्वाथ्यमानं निष्फेनं निर्वेगं निर्मलं जलम् ।
तत् सर्वदोषशमनं दीपनं पाचनं लघु ॥६१॥
उष्णं तदग्निजननं लघु तदग्निशोधनम् ।
पार्श्वरुक्पीनसाध्मानहिक्कानिलकफापहम् ॥६२॥
तत् पादहीनं वातघ्नमर्द्धहीनञ्च पित्तजित् ।
त्रिपादहीनं श्लेष्मघ्नं संग्राह्यग्निप्रदं लघु ॥६३॥
निहन्ति श्लेष्मसङ्घातं मारुतञ्चापि कर्षति ।
अजीर्णं जरयत्याशु पीतमुष्णोदकं निशि ।
पादावशेषं सलिलं ग्रीष्मे शरदि शस्यते ॥६४॥
हेमन्ते शिशिरे वर्षास्वर्द्धहीनमथापि च ।
शृतशीतं सदा पथ्यं लघु नीरं त्रिदोषनुत् ।
तच्च पर्युषितं निघ्नमम्लीभूतं त्रिदोषकृत् ॥६५॥
दिवा शृत पयो रात्रौ गुरुतामधिगच्छति ।
रात्रौ शृत दिवा पीतं तथा दोषकरं परम् ॥६६॥

अथ साधारण दुग्धनाम गुणाः ।

दुग्धं प्रस्रवणं क्षीरं सौम्यं सञ्जीवनं पयः ॥६७॥

दुग्धं बलकरं शीतं मधुरं वातपित्तजित् ।
स्निग्धं रसायनं मेध्यं जीवनं धातुवर्द्धनम् ।
चेतोरुग्गदश्वासचयार्शोभ्रमनुद् गुरु ॥६८॥
बालवृद्धक्षतादीनां क्षीणक्षानां प्रशस्यते ।
प्रायः प्राणभृतां सात्म्यं विशेषादोजसे हितम् ॥६८॥

अथ गोदुग्धनामगुणाः ।

गोक्षीरं मधुरं शीतं गुरु स्निग्धं रसायनम् ।
बृंहणं स्तन्यकृद्दर्ण्यं जीवनं वातपित्तनुत् ॥७०॥
कृष्णगवां वरं क्षीरं श्वेतानां श्लेष्मलं गुरु ।
बाल्यवत्सविवत्सानां गवाङ्क्षीरं त्रिदोषहृत् ॥७१॥
पिण्याकाद्यशनाज्जातं क्षीरं गुरु कफापहम् ॥७२॥

अथ अजादुग्धनामगुणाः ।

आजं गव्यगुणं ग्राहि विशेषाद्दीपनं लघु ।
हन्ति क्षयार्शोऽतीसारप्रदरास्रभ्रमज्वरान् ॥७३॥
अजानामल्पकायत्वात् कटुतिक्तादिभक्षणात् ।
स्तोकाम्बुपानाद् व्यायामात् पयः सर्वगदापहम् ॥७४॥

अथ आविकदुग्धनामगुणाः ।

आविकं मधुरं केश्यं स्निग्धं वातकफापहम् ।
गुरु कासेऽनिलोद्भूते केवले चानिले वरम् ॥७५॥

अथ माहिषीदुग्धनामगुणाः ।

माहिषं मधुरं गव्यात् स्निग्धं गुरु बलप्रदम् ।
निद्राशुक्रकरं शीतं मलाभिष्यन्दि वह्निनुत् ॥७६॥

अथ नारीदुग्धनामगुणाः ।

नार्य्या लघु पयः शीतं दीपनं वातपित्तजित् ।
चक्षुःशूलाभिघातघ्नं नस्याश्च्योतनयोर्वरम् ॥७७॥

अथ हस्तिनीदुग्धनामगुणाः ।

हस्तिन्याः स्वादु बलकृत् चक्षुष्यं शीतलं गुरु ॥७८॥

अथ औष्ट्रदुग्धनामगुणाः ।

औष्ट्रं स्वादुरसं रूक्षं लवणं लघु दीपनम् ।
क्रिमिकुष्ठकफानाहशोथोदरहरं सरम् ॥७८॥

अथ आश्वदुग्धनामगुणाः ।

आश्वमुष्णं पयो रूक्ष बल्यं वातकफापहम् ।
लवणाम्लं लघु स्वादु सर्वमेकशफं तथा ॥८०॥

अथ दुग्धसामान्यनामगुणाः ।

धारोष्णं दीपनं बल्यं लघु शीतं त्रिदोषनुत् ॥८१॥
मुहूर्त्तत्रितयादूर्द्ध्वं पयो भवति विक्रियम् ।
तदेव द्विगुणे काले विषवद्धन्ति मानवम् ॥८२॥
*तस्मात् शीतगुण तस्मात् ययस्तत्कालिकं पिबेत् ।*
सुधासमं तदेव स्यात् धाराशीत त्रिदोषहृत् ॥८३॥
धारोष्ण शस्यते गव्यं धाराशीतन्तु माहिषम् ।
शृतोष्णमाविकं पथ्यं शृतशीतमजापयः ॥८४॥
शृतशीतं जयेत् पित्तं शृतोष्णं कफमारुतौ ।
अतिपक्वं गुरु स्निग्धं हृद्य बलविवर्द्धनम् ॥८५॥
आममामप्रद क्षीरमभिष्यन्दिकरं गुरु ॥८६॥
आममेव स्त्रियाः क्षीरं पथ्य पक्वन्तु दोषकृत् ॥८७॥
प्राभातिकं पयः प्रायो विष्टम्भि गुरु बृंहणम् ॥८८॥
रात्रौ चन्द्रगुणाधिक्याद् व्यायामपरिवर्जनात् ॥८९॥
प्रदोषयमनुद बल्यं चक्षुष्य वातपित्तहृत् ॥९०॥
दिवाकरकराघाताद् व्यायामानिलसेवनात् ॥९१॥
विवर्णमम्लदुर्गन्धि लवणं ग्रथित पयः ॥९२॥
वर्जयेदम्ललवणयोगात् कुष्ठादिदोषकृत् ॥९३॥
सन्तानिकं पर रूक्ष शृतदुग्धोपरि स्मृतम् ।
सन्तानिका गुरुः शीता हृद्या पित्तास्रवातनुत् ॥९४॥

सप्तरात्रात्परं क्षीरमसम्यग्नु मोरटम्।
नष्टदुग्धं भवेद्यत्तु मोरटं भेज्जटोऽब्रवीत् ॥९५॥
क्षीरं तत्कालसूताया: पीयूषघनमुच्यते ॥९६॥
पक्वं दध्ना समं क्षीरं विज्ञेया दधिकूर्चिका॥९७॥
तक्रेण तक्रकूर्चिका तयोः पिण्डः किलाटकः।
पाकं विना स एव स्यात् क्षीरयुक्तसितान्वितः ॥९८॥
मोरटन्तु सपीयूषः कूर्चिका दधितक्रयोः।
किलाटक्षीरशाकाभ्यामिते निद्राप्रपुष्टिदाः ॥९९॥
गुरवः श्लेष्मला ह्यष्या हृद्या वातानिनाशिनी।
वातला दुर्जरा रूक्षा ग्राहिणी तक्रकूर्चिका ॥१००॥

अथ दधिनामगुणाः।

दधि स्यान्न पयः सम्यक् स्यानमीषत् तु मन्दकम्।
तच्चिष्टमक्तमत्यम्लं मधुराम्लमिति स्मृतम् ॥१०१॥
दध्युष्णं दीपनं स्निग्धं कषायानुरसं गुरु।
पाकेऽम्लं ग्राहि पित्तास्रशोफमेदःकफप्रदम् ॥१०२॥
मूत्रकृच्छ्रे प्रतिश्याये शीतके विषमज्वरे।
अतोसारेऽरुचौ कार्श्ये शस्यते बलवर्द्धनम् ॥१०३॥
मन्दं त्रिदोषजननं मधुरं वातपित्तजित्।
अम्लं पित्तास्रकफकृदत्यम्लं रक्तपित्तदम् ॥१०४॥
मधुराम्लं गुणैर्मिश्रैर्दधि पूर्ववदादिशेत् ॥१०५॥
गव्यं दध्युत्तमं बल्यं पाके स्वादु रुचिप्रदम्।
पवित्रं दीपनं स्निग्धं पुष्टिकृत्पवनापहम् ॥१०६॥
आजं दध्युत्तमं ग्राहि लघु दोषात्रयापहम्।
शस्यते श्वासकासार्शःक्षयकार्श्येषु दीपनम् ॥१०७॥
माहिषं दधि पुन्नामकफवातप्रकोपणम्।
अभिष्यन्दिरसपाके स्वादु प्रायेण दीपनम् ॥१०८॥

माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत् ।
स्वाद्यं विपाके मधुरं गुरु रक्तप्रदूषणम् ॥१०९॥
नार्या दधि त्रिदोषघ्नं चक्षुष्यं तर्पणं गुरु ।
बल्यं विपाके मधुरं स्निग्धं वह्निकरं परम् ॥११०॥
हस्तिन्या दधि वीर्य्योष्णं कटु पाकेऽग्निनाशनम् ।
कषायानुरसं वर्चोवर्द्धनं कफवातजित् ॥१११॥
औष्ट्रं विपाके कटुकं भेदि चाराम्लकं दधि ।
निहन्त्युदरकुष्ठार्शःशूलवह्नानिलक्रिमीन् ॥११२॥
एकवाजिशफं रूक्षं दध्यभिष्यन्दि दीपनम् ।
दीपनं स्वादु चक्षुष्यं वातश्लेष्मकमूत्रनुत् ॥११३॥
सर्वेषु दधिषु श्रेष्ठं गव्यमेव गुणावहम् ।
गालितं दधि सुस्निग्धं वातघ्नं श्लेष्मलं गुरु ॥११४॥
बलपुष्टिकरं रुच्यं मधुरं नातिपित्तकृत् ।
शृतक्षीरभवं रुच्यं दधि स्निग्धं गुणोत्तमम् ॥११५॥
पित्तानिलापहं सर्वधात्वग्निबलवर्द्धनम् ।
असारं दधि संग्राहि कषायं वातलं लघु ।
विष्टम्भि दीपनं रुच्यं ग्रहणीरोगनाशनम् ॥११६॥
सशर्करं दधि श्रेष्ठं तृष्णापित्तास्रदाहनुत् ।
सगुडं वातनुद् वृष्यं बृंहणं तर्पणं गुरु ॥११७॥
वसन्ते शरदि ग्रीष्मे दधि प्रायेण निन्दितम् ।
हेमन्ते शिशिरे शस्तं वर्षासु च गुणावहम् ॥११८॥
शस्यते दधि नो रात्रौ शस्तं चाम्बुघृतान्वितम् ॥११९॥
दध्युत्तरो दधिस्नेहो दध्युग्रः कटुकः सरः ॥१२०॥
दध्नः सरो गुरुर्वृष्यो वातवह्निप्रणाशनः ।
वस्तिविशोधनश्चाम्लः पित्तश्लेष्मविवर्द्धनः ॥१२१॥
मस्तु क्लमहरं बल्यं लघु भक्ताभिलाषकृत् ।

स्रोतोविशोधन ह्लादि कफलृष्णानिलापहम् ।
चक्रष्य शोषण शीघ्र भिनत्ति मलसञ्चयम् ॥१२२॥

अथ तक्रवर्गनामगुणा ।

दण्डाहत कालपेय गोरसाच्च विलोडितम् ।
सरस निर्जल घोल मथित रसवर्जितम् ॥१२३॥
समोदक श्वेतमथ मुदश्विच्चार्धवारिकम् ।
पादोदक भवेत्तक्रमर्धाभ्भोऽन्ये ऽवमायिरे ॥१२४॥
तक्र ग्राहि कषायाम्ल मधुर दीपन लघु ।
वीर्योष्ण बलद रूक्ष प्रीणन वातनाशनम् ।
हन्ति शोथगरच्छर्दिप्रसेकविषमज्वरान् ॥१२५॥
पाण्डुमेदोग्रहण्यर्शोमूत्रग्रहभगन्दरान् ।
मेह गुल्ममतीसार शूलप्लीहकफक्रमीन् ।
श्वित्रकोष्ठगतव्याधिकुष्ठतृष्णोदरापची ॥१२६॥
तक्र निदाघे शरदि दौर्बल्ये भ्रममूर्च्छयो ।
पित्तास्रमदशोफषु कदाचिन्न प्रशस्यते ॥१२७॥
शीतकाले यक्ष्मसु कफवातामयेषु च ।
स्रोतोनिरोधे मन्दाग्नौ तक्रमेवामृतोपमम् ॥१२८॥
तक्रन्तु मधुर सर्व श्लेष्मल वातपित्तनुत् ॥१२९॥
चम्ल वातहर तक्र रक्तपित्तप्रकोपणम् ॥१३०॥
वातेऽम्ल सैन्धवोपेत स्वादु पित्ते सशर्करम् ॥१३१॥
पिबेत् तक्र कफे रूक्ष व्योषक्षारसमन्वितम् ।
समुद्धृतघृत तक्र पथ्य लघु विशेषत ॥१३२॥
स्तोकोद्धृतघृत तस्माद्गुरु वृष्य कफावहम् ।
अनुद्धृतघृत शीत गुरु पुष्टिकफप्रदम् ॥१३३॥
यान्यत्रानि दधीन्यष्टौ तद्गुण तक्रमादिशेत् ।
सरस निर्मल घोल मथित रसवर्जितम् ॥१३४॥

दधिवद्घोलमथिते किञ्चित् तु लघु नीरतः ।
मण्डतक्रा लघुतक्रा कूर्चिका दधिसम्भवा ॥१३५॥

अथ नवनीतवर्गनामगुणाः ।

हैयङ्गवीन सरजं नवनीतन्तु मन्थनम् ।
नवनीतं लघु ग्राहि सद्यस्कं स्वादु शीतलम् ॥१३६॥
मध्यमीषत्कषायाम्लं हृद्यं पित्तानिलापहम् ।
अविदाह्यग्निकृद्ग्राह्यर्शोव्रणकासजित् ॥१३७॥
नवनीतं चिरोद्भूतं गुरु मेदःकफप्रदम् ।
शोषघ्नं बलकृद् हृद्यं विशेषाद्दत्त शिशोः ॥१३८॥
क्षीरोत्थं तदतिस्निग्धं चक्षुष्यं रक्तपित्तजित् ।
हृद्यं बलकरं ग्राहि मधुरं शीतलं परम् ॥१३९॥

अथ घृतनामगुणाः ।

घृतमाज्यं हविः सर्पिराधारममृताह्वयम् ॥१४०॥
घृतं रसायनं स्वादु चक्षुष्यं गुरु दीपनम् ।
शीतवीर्यं विषालक्ष्मीपापपित्तानिलापहम् ॥१४१॥
बलाभिष्यन्दि कान्त्योजस्तेजोलावण्यवृद्धिकृत् ।
उदावर्त्तज्वरोन्मादशूलानाहव्रणान् जयेत् ॥१४२॥
स्निग्धं कफप्रदं रूक्षं क्षयवीसर्परक्तजित् ।
स्वर्थं घ्नतहरं प्राय शस्यते वामहवयो ॥१४३॥
घृतं क्षीरभवं ग्राहि शीतलं नेत्ररोगजित् ।
निहन्ति पित्तदाहास्रमदमूर्च्छाभ्रमानिलान् ॥१४४॥
पुराणं कटुकं पाके सर्पिर्दोषत्रयापहम् ।
शोषनेत्रशिर शूलकुष्ठापस्मारशोथजित् ॥१४५॥
योनिरोगज्वरश्वासकुष्ठार्शोगुल्मपीनसान् ।
निहन्ति दीपनं वस्तिनस्यपूतिः प्रशस्यते ॥१४६॥
घृतमण्डोऽपि घृतवद् गुणैस्तीक्ष्णो लघुः सरः ॥१४७॥

दशवर्षात्परं सर्पिः क्षौम्रमित्यभिधीयते।
रक्षोघ्नं लघु तस्मात् तु गुणैः श्रेष्ठं महाघृतम् ॥१४८॥
घृतस्य गुणदोषौ तु चोरतुल्यौ समादिशेत्।
सर्वेषु गुणकृत् गव्यमाविकं निन्दितं पुनः ॥१४९॥

अथ तिलतैलनामगुणाः।

तिलतैलं गुरु स्थैर्य्यं बलवर्णकरं सरम्।
वृष्यं विकाशि विशदं मधुरं रसपाकयोः ॥१५०॥
सोष्णं कषायानुरसं तिक्तं श्लेष्मानिलापहम्।
विपाके मधुरं तीक्ष्णं हृद्यं रक्तपित्तजित् ॥१५१॥
श्लेष्मलं कटु विण्मूत्रत्वग्गर्भाशयशोधनम्।
दीपनं मतिदं केश्यं व्यवायि व्रणमेहनुत् ॥१५२॥
श्रोत्रयोनिशिरःशूलनेत्ररोगविनाशनम् ॥१५३॥
मथिताच्युतविच्छिन्नभग्नव्यालविषादिषु।
क्षारेऽग्निदग्धे तत्पथ्यं पानाभ्यङ्गादिभिः सदा ॥१५४॥
घृतमब्दात्परं पक्वं हीनवीर्य्यं प्रजायते ॥१५५॥
तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकम् ॥१५६॥

अथ एरण्डतैलनामगुणाः।

एरण्डतैलं मधुरमुष्णं दीपनशोधनम्।
वृष्यं त्वच्यं वयःस्थापि मेधाकान्तिबलप्रदम्।
कषायानुरसं सूक्ष्मं योनिशुक्रविशोधनम् ॥१५७॥
हन्ति वातोदरानाहगुल्माष्ठीलाकटिग्रहान्।
वातशोणितशूलादिव्रणशोथामविद्रधीन् ॥१५८॥

अथ कटुतैलनामगुणाः।

इङ्गोकाम्रमूलजीमूतादन्तीकाश्वगिरिभुजम्।
निम्बातसीकरञ्जार्कहस्तिकर्णेन्द्रदोभवम् ॥१५९॥
शङ्खिनीनिम्बकं तैलं तैलं ज्योतिष्मतीभवम्।

कुसुम्भसर्षपोद्भूतं तैलं सौवर्चलन्तथा ॥१६०॥
विपाके कटुकं तीक्ष्णमुष्णं तिक्तं सरं लघु।
हन्ति कुष्ठामयं श्लेष्ममेहमूर्च्छामयक्रमीन् ॥१६१॥

अथ निम्बतैलनामगुणाः।

निम्बतैलं जयेत् कुष्ठं व्रणश्लेष्मज्वरक्रमीन् ॥१६२॥

अथ अतसीतैलनामगुणाः।

अतसी तैलमाग्नेयं स्निग्धोष्णं कफपित्तकृत्।
कटुपाकमचक्षुष्यं बल्यं वातहरं गुरु ॥१६३॥

अथ सार्षपतैलनामगुणाः।

सार्षपं क्रमिनुत् तैलं कुष्ठकण्डूहरं लघु।
पित्तास्रदूषणं हन्ति मेहकर्णशिरोगदान् ॥१६४॥

अथ कुसुम्भतैलनामगुणाः।

कौसुम्भं कटुकं तैलमचक्षुष्यं बलप्रदम्।
केवलानिलनुत्तीक्ष्णं विदाह्युष्णं त्रिदोषकृत् ॥१६५॥

अथ ज्योतिष्मतीतैलनामगुणाः।

ज्योतिष्मतीभवं तैलं पित्तलं स्मृतिबुद्धिदम् ॥१६६॥

अथ नारिकेलतैलनामगुणाः।

अक्षोटिकाहिमुक्ताख्यनारिकेलभवं हरेत्।
तैलं पित्तानिलं केश्यं गुरु श्लेष्मकरं हिमम् ॥१६७॥

अथ शिंशपातैलनामगुणाः।

शिंशपागुरुशण्डीरसालामरदारुजम्।
तैलं कषायं कटुकं तिक्तं दुष्टव्रणापहम्।
वातरक्तविषश्लेष्मकण्डूकुष्ठानिलान् जयेत् ॥१६८॥

अथ भल्लातकतैलनामगुणाः।

भल्लातकं तीव्ररक्तं वीर्य्योष्णं स्वादु तिक्तकम्।
कुष्ठोदराघसिद्दोषासमेदोमेहक्रमीन् हरेत् ॥१६९॥

अथ पालाशमाधूकपाटलतैलनामगुणाः ।
तैलं पालाशमाधूकपाटलाफलसम्भवम् ।
कषायं मधुरं दाहपित्तश्लेष्मगदान् हरेत् ॥१००॥

अथ त्रपुषादितैलनामगुणाः ।
कुष्माण्डत्रपुषैर्वारुतुम्बीकालिङ्गतिक्तकैः ।
क्षतं प्रियालजीवन्तीश्लेष्मान्तकभवं तथा ॥१०१॥
तैलं गुरु स्वादुपाकं शीतं मूत्रप्रवर्त्तकम् ।
अदीपनमभिष्यन्दि कफदं वातपित्तजित् ॥१०२॥

अथ एकैषिजतैलनामगुणाः ।
ऐकैषिजं हिमं तैलं पित्तघ्नं श्लेष्मवातक्षत् ॥१०३॥

अथ यवतिक्तोद्भवतैलनामगुणाः ।
यवतिक्तोद्भवं तैलमीषत् तिक्तं रसायनम् ।
दीपनं लेखनं मेध्यं पथ्यं दोषत्रयापहम् ॥१०४॥

अथ आम्रतैलनामगुणाः ।
आम्रतैलमनातिक्तं मधुरं नातिपित्तलम् ।
कफवातहरं रूक्षं सुगन्धि विशदं परम् ॥१०५॥

अथ स्नेहवर्गनामगुणाः
स्थावरा वातशमनाः स्नेहाः प्रोक्तास्तु तैलवत् ।
गौल्मिकेषु तैलश्च बलवर्णकरं पुनः ॥१०६॥
मेदोमज्जावसा ज्ञेया ग्राम्यानूपौदकोद्भवाः ।
गुरवो मधुरायोष्णाः समीरणविनाशनाः ॥१०७॥
जाङ्गलैकशफादीनां सक्रव्यादां कषायकाः ।
लघवः शीतला ज्ञेया रक्तपित्तनिवर्हणाः ॥१०८॥
प्रतुदा विष्किरादीनां आतस्याः कफलमनाः ॥१०९॥
घृततैलवसामज्जामज्ञानो वातनाशनाः ।
यथोत्तरं परिज्ञेया विपाके स्वादवः परम् ॥११०॥

### अथ मद्यनामगुणाः ।

मद्यं हाला सुरा शुण्डा मदिरा वरुणात्मजा ।
सुरा गन्धोत्तमा कल्या देवसृष्टा च वारुणी ॥१८१॥
मद्यं पित्तकरं प्रायं सरं रोचनदीपनम् ।
विदाहि सृष्टविण्मूत्रं तीक्ष्णं वातकफापहम् ॥१८२॥
विधिनाक्षयुतं पीतं तस्मादमृतसन्निभम् ।
अन्यथा कुरुते रोगानतिपीतं विषोपमम् ॥१८३॥
द्राक्षोत्थमविदाहित्वाद्रक्तपित्तेषु शस्यते ।
बलपुष्टिकरं मद्यं रक्तार्शोहारि दीपनम् ॥१८४॥
माध्वी कल्पगुणा किञ्चित् खर्जूरमनिलप्रदम् ।
तदेव विशदं रुच्यं श्लेष्मघ्नं कर्षणं लघु ॥१८५॥
शालिषष्टिकपिष्टादिकृतं मद्यं सुरा मतम् ॥१८६॥
सुरा गुर्वी बलस्तन्यपुष्टिमेदःकफप्रदा ।
ग्राहिणी शोथगुल्मार्शोग्रहणीमूत्रकृच्छ्रनुत् ॥१८७॥
पुनर्नवाशालिपिष्टैर्विहिता वारुणी मता ॥१८८॥
सुरावत् वारुणी लघ्वी पीनसाध्मानशूलनुत् ॥१८९॥
प्रसन्ना स्यात् सुरामण्डस्तस्मात् कादम्बरी घना ॥१९०॥
जङ्गलस्तदधः प्रोक्तो जङ्गलान्मेदको घनः ।
पक्कशो जङ्गलः सारः सुराबीजन्तु किण्वकम् ॥१९१॥
प्रसन्नानाहगुल्मार्शश्छर्द्यरोचकवातजित् ।
दीपन्याध्मानहृत् कुक्षितोदशूलप्रणाशिनी ॥१९२॥
कादम्बरी गुरुर्हृद्या दीपनी वातकृत्सरा ॥१९३॥
जङ्गलः कफनुद् ग्राही शोफार्शोग्रहणीहरः ॥१९४॥
मेदको मधुरो बल्यस्तम्भनः शीतलो गुरुः ।
पक्कशो हृतसारत्वात् विष्टम्भी वातवर्द्धनः ॥१९५॥
किण्वकं वातशमनमहृद्यं दुर्जरं गुरु ॥१९६॥

माचिकी सा सुरा या स्यादवल्कशालितण्डुलैः ॥१९७॥
माचिकी पाण्डुशोफार्शः पित्तास्रकफकुष्ठनुत् ।
किञ्चिद्वातकरा रूक्षा दीपनी रेचनी लघुः ॥१९८॥
यवपिष्टकृतं मद्यं प्रोक्तं यवसुरा च सा ॥१९९॥
काकोलको हली ज्ञेया मैरेयो धान्यजासवः ॥२००॥
आसवस्य सुरायाश्च द्वयोरप्येकभाजनम् ।
सन्धानं तद्विजानीयात् मैरेयमुभयात्मकम् ॥२०१॥
क्वचित्तु धातकीपुष्पं गुडधान्याम्बुसाधितम् ॥२०२॥
गुर्वी यवसुरा रूक्षा स्याद्विष्टम्भि त्रिदोषकृत् ।
काकोली बृंहणी हृद्या दृष्टिमान्द्यप्रदा गुरुः ॥२०३॥
मैरेयं बृंहणं हृद्यं गुरु सन्तर्पणं सरम् ॥२०४॥
मद्यं सर्वरसं जातं मधूलकमुदीर्यते ॥२०५॥
मधूलकं गुरु स्वादु स्निग्धं शुक्रकफप्रदम् ॥२०६॥
शर्करो दीपनः स्वादु पाचनो रोचनो लघुः ।
स्त्रीविलासकरो वातशोषवह्निविकारनुत् ॥२०७॥
मध्वासवो लघू रूक्षः कुष्ठमेहविषापहः ॥२०८॥
गौडोऽग्निवर्द्धनो वर्णबलकृत् तर्पणः कटुः ।
तिक्तको बृंहणः स्वादुः सृष्टविण्मूत्रमारुतः ॥२०९॥
इक्षोः पक्वरसैः पक्वः सीधुः पक्वरसः स्मृतः ।
आमैः स एव विहितो बुधैः शीतरसो मतः ॥२१०॥
सीधुः पक्वरसः श्रेष्ठः स्वराग्निबलवर्णकृत् ।
वातपित्तकरो सद्यः स्नेहनो रोचनो जयेत् ।
विबन्धमेदःशोफार्शःशोषोदरकफामयान् ॥२११॥
तस्मादल्पगुणः शीतरसः संलेखनः स्मृतः ॥२१२॥
जाम्बवं चोष्णमप्यूतः जम्बूरस गुणोदय ॥२१३॥
जाम्बवो बद्धनिःस्यन्दः कषायोऽनिलकोपनः ॥२१४॥

अरिष्टासव सीधूनां गुणान् कर्माणि चादिशेत् ।
बुद्धा यथा स्वसंस्कारमवेक्ष्य कुशलो भिषक् ॥२१५॥
सान्द्रं विदाहि दुर्गन्धि विरसं क्रिमिसङ्कुलम् ।
अहृद्यं तरुणं रूक्षमुष्णं दुर्भाजने स्थितम् ॥२१६॥
अल्पौषधं पर्युषितमत्यर्थं पिच्छिलञ्च यत् ।
कफप्रकोपि तन्मद्यं दुर्जरञ्च विशेषतः ॥२१७॥
पित्तप्रकोपि बहुलं तीक्ष्णमुष्णं विदाहि च ।
अहृद्यं फेनिलं पूतिक्रमिलं विरसं गुरु ॥२१८॥
तथा पर्युषितं चापि विन्द्यादनिलकोपनम् ।
सर्वदोषैरुपेतन्तु सर्वदोषप्रकोपनम् ॥२१९॥
चिरस्थितं जातरसं दीपनं कफवातजित् ।
रुच्यं प्रसन्नं सुरभि मेध्यं सेव्यं मदाद्भवम् ॥२२०॥
तस्मानेकप्रकारस्य मद्यस्य रसवीर्य्यनात् ।
सशौच्यादौष्ण्यवातत्वा विकाशित्वात् स्वकिन्नुत् ॥२२१॥
समेत्य हृदयं प्राप्य धमनीरूर्द्धमागताः ।
विक्षुभ्येन्द्रिय चेतांसि मदयत्याशु वीर्य्यतः ॥२२२॥
चिरेण श्लेष्मके पुंसि पातनो जायते मदः ।
अचिरादातिके दृष्टः पैत्तिके शीघ्रमेव च ॥२२३॥
नवं मद्यमभिष्यन्दि त्रिदोषजनकं सरम् ।
अहृद्यं बृंहणं दाहि दुर्गन्धं विशदं गुरु ॥२२४॥
जीर्णं तदेव रोचिष्णु क्रमिश्लेष्मानिलापहम् ।
हृद्यं सुगन्धि सुगुणं लघु स्रोतोविशोधनम् ॥२२५॥
सात्त्विके गीतहास्यादि राजसे साहसादिकम् ।
तामसे निन्द्यकर्माणि निद्रादि कुरुते तदा ॥२२६॥
शुक्तं कफघ्नं तीक्ष्णोष्णं लघु रोचनपाचनम् ।
पाण्डुक्रमिहरं रूक्षं भेदनं रक्तपित्तकृत् ॥२२७॥

अथ आजमूत्रनामगुणाः ।
आजं गुल्मविषश्वासकामलापाण्डुदोषजित् ॥२४२॥
अथ आविकमूत्रनामगुणाः ।
आविकं शोफकुष्ठार्शोमेहवर्चोग्रहापहम् ॥२४३॥
अथ गर्दभमूत्रनामगुणाः ।
गार्दभं ग्रहणीमेहकुष्ठोन्मादक्रमीन् जयेत् ॥२४४॥
अथ उष्ट्रमूत्रनामगुणाः ।
औष्ट्रमुन्मादशोफार्शःक्रमिशूलोदरापहम् ॥२४५॥
अथ नरमूत्रनामगुणाः ।
नरमूत्रं गरं हन्ति सेवितं तद्रसायनम् ॥२४६॥
गोऽजाविमहिषीणाञ्च स्त्रीणां मूत्रं प्रशस्यते ।
खरोष्ट्रेभनराश्वानां पुंसां मूत्रं हितं मतम् ॥२४७
इति श्रीमदनपालविरचिते मदनविनोदनाम्नि निघण्टौ
पानीयादिनामविशेषवर्गोऽष्टमः ।

---

## इक्षुकादि वर्गः ।

मुद्भवितानेन स्थेति वक्त्रे प्रसारिते वीक्ष्य ततोजगन्ति ।
सविस्मयं सादरमीक्ष्यमाणं यशोदया नन्दसुतं नमामि ॥१॥
अथ इक्षुभेदनामगुणाः ।
इक्षुर्महारसो वेणुर्निःस्रतो गुडपत्रकः ।
तृणराजो मधुतृणो गण्डीरो मृतपुष्पकः ॥ २ ॥
दृश्यमूलो लोहितेक्षुः पौण्ड्रकः पौण्ड्रकोऽपरः ।
रसालः सुकुमारोऽपि कान्तो भुर्भीरुको मतः ॥ ३ ॥
इक्षुः स्वादुर्गुरुः शीतो वृष्यः स्निग्धो बलप्रदः ।
जीवनो वातपित्तघ्नः कुर्यान्मूत्रकफक्रमीन् ॥४॥

स मूले मधुरोऽत्यर्थं मध्ये मधुर एव च।
अग्रग्रन्थिषु विज्ञेयो लवणो मूत्रलस्तथा ॥ ५ ॥
लोहितेक्षुगुरुः शीतो दाहपित्तास्रकृच्छ्रनुत् ॥ ६ ॥
पौण्ड्रकः शीतलः स्निग्धो बृंहणः कफकृत् सरः ॥ ७ ॥
कृष्णेक्षुस्तत्गुणो वंशः क्षारः किञ्चित् तु तत्समः ॥ ८ ॥
वंशवच्छतपौरोऽपि किञ्चिदुष्णः समीरजित् ॥ ९ ॥
कान्तारतापसौ तद्वत् काष्ठेक्षुर्वातलो हिमः ।
कोशको हि गुरुः शीतो रक्तपित्तक्षयापहः ॥१०॥
सूचीपत्रो नीलपौरो नेपालो दीर्घपत्रकः ।
वातलः कफपित्तघ्नः सकषायोऽतिदाहकृत् ॥ ११ ॥

अथ इक्षुरसनामगुणाः ।

दन्तनिष्पीडितस्तेषां रसः पित्तास्रनाशनः ।
शर्करासमवीर्यः स्यादविदाही कफप्रदः ।
गुरुर्विदाही विष्टम्भी यान्त्रिकस्तु प्रकीर्तितः ॥१२॥

अथ मत्स्यण्डीनामगुणाः ।

सिता मत्स्यण्डिका पक्वो मत्स्यण्डी बलकस्तथा ॥१३॥
अन्या विषपलोऽन्या शिशुका क्षत्तिकामला ॥१४॥
खण्डमन्यत् खण्डसिता माधवी मधुशर्करा ॥१५॥
यवासशर्कराऽन्या सा यवासक्राथसम्भवा ॥१६॥
अन्याः पुष्पसिता प्रोक्ता पुष्पमस्त् तशर्करा ॥१७॥
फाणित क्षुद्रगुडको गुडस्त्विक्षुरसोद्भवः ॥१८॥
मत्स्यण्डी ग्राहिणी वम्या गुरुः पित्तानिलापहा ॥१९॥

अथ सितोपलानामगुणाः

सितोपला सरा लघ्वी वातपित्तहरा हिमा ॥२०॥

अथ खण्डनामगुणाः ।

खण्डस्तु मधुरं हृद्यं वृष्यं पुष्टिबलप्रदम् ॥ २१ ॥

अथ मधुशर्करानामगुणाः ।

माधवी शर्करा रूक्षा कफपित्तहरा गुरुः ॥२२॥

अथ यवासशर्करानामगुणाः ।

यवासशर्करा शीता वातला कफपित्तजित् ॥२३॥

अथ पुष्पसिताशर्करानामगुणाः ।

सिता पुष्पसिता हृद्या रक्तपित्तहरा लघुः ॥२४॥

अथ फाणितनामगुणाः ।

फाणितं गुर्वभिष्यन्दि बृंहणं मूत्रशोधनम् ॥२५॥

अथ मधूकनामगुणाः ।

मधूकं फाणितं वस्तिदूषणं वातपित्तलम् ॥२६॥

अथ गुडनामगुणाः ।

गुडः क्षारो गुरुः स्वादुर्वातपित्ताग्निकृत्सरः ।

बल्यः कृमिश्लेष्मकरो मूत्ररक्तविशोधनः ॥२७॥

जीर्णो हृद्यो लघुः पथ्यो नाभिष्यन्द्यग्निपुष्टिकृत् ॥२८॥

इक्षोर्विकारान् विमलान् यथा कुर्युर्गुणास्तथा ॥२९॥

दाहमूर्च्छापित्तास्रकविषमदहरा हिमाः ।

गुरवो मधुरा बल्याः स्निग्धा वातहराः सराः ॥३०॥

अथ मधुनामगुणाः ।

मधु पुष्पासवं पुष्परसं माक्षिकमीरितम् ॥३१॥

माक्षिकं पौत्तिकं क्षौद्रं भ्रामरं मधुविस्तरात् ॥३२॥

माक्षिकं तैलसदृशं पौत्तिकं घृतसन्निभम् ।

क्षौद्रं कपिलवर्णं स्यात् भ्रामरं स्फटिकोपमम् ॥३३॥

मधु शीतं लघु स्वादु रूक्षं ग्राहि विलेखनम् ।

चक्षुष्यं दीपनं स्वर्यं व्रणशोधनरोपणम् ॥ ३४ ॥

वर्ण्यं मेधाकरं हृद्यं विशदं रोचनं जयेत् ।

कुष्ठार्शःकासपित्तास्रकफमेहक्लमक्षमीन् ॥३५॥

मेदस्तृष्णावमिश्वासहिक्कातीसारविड्ग्रहान् ।
दाहक्षततृयां स्तत्तु योगवाह्यल्पवातलम् ॥३६॥
माक्षिकं मधुषु श्रेष्ठं नेत्रामयहरं लघु ॥३७॥
पौत्तिकं मधु रूक्षोष्णं पित्तदाहास्रवातकृत् ॥३८॥
क्षौद्रं माक्षिकमप्येव विशेषान्मेहनाशनम् ॥३९॥
भ्रामरं रक्तपित्तघ्नं मूत्रजाड्यकरं गुरु ॥४०॥
नवीनं मध्वभिष्यन्दि स्निग्धं श्लेष्महरं सरम् ॥४१॥
पुराणं ग्राहि तद्रूक्षं मेदोघ्नमतिलेखनम् ॥४२॥
विषादिपुष्टपुष्पेभ्यः सविषा माक्षिकादयः ।
मधु चिन्वन्ति तस्मात्तत् स्वभावात्सविषं स्मृतम् ॥४३॥
तस्मादग्न्यातपात्तप्तं तद्युक्तं हन्ति मानवम् ।
उष्णे काले च देशे च द्रव्ये कस्तेन योजितम् ॥४४॥
निरूहे छर्दने तच्छ्रेष्ठस्तद्युक्तं न निवार्यते ॥४५॥
तस्मात्पाकमनप्राप्तं व तयोस्ताहिमिवर्त्तते ।
आमामये जले नापि तद्द्रवे न विरुध्यते ॥४६॥
मदनं मधुजं सिक्थं मधूच्छिष्टं मधूलितम् ॥४७॥
मदनं मृदु सुस्निग्धं भूतघ्नं व्रणरोपणम् ।
भग्नसन्धानकृद्वातकुष्ठवीसर्परक्तजित् ॥४८॥
यो राज्ञां मुखतिलकः कटारमल्ल-
श्चेन श्रीमदनृपेण निर्मितेऽत्र ।
यत्रे ऽभून्मदनविनोदनाम्नि पूर्णो
वर्गोऽयं मधुरभेरिक्षुकादिः ॥४९॥
इति नवमवर्गः ।

—•—

# धान्यादि वर्गः ।

अजन्मामृत्य बहुजन्ममृत्यु तमालभास विशदप्रकाशम् ।
मुक्तिप्रदो बन्धमुलूखलेन वै लोकतात शिशुमाश्रयामि ॥१

अथ शाल्यादिनामगुणा ।

शालयो रक्तशाल्याद्या व्रीहय षष्टिकादय ।
मुद्गादि वैदल शैल कङ्ग्वादि तृणधान्यकम् ॥२॥
क्षुद्रधान्य कुधान्यन्तु शूकधान्य यवादिकम् ।
रक्तशालिर्लोहित स्यात् गरुड शकुनाहृत ॥३॥
सुगन्धिको महाशालि कलमस्तु कलामक ।
रक्तशालिर्दीर्घशूक पुण्ड्रो महिषमस्तक ॥४॥
पूर्णचन्द्रो महाशालि पुण्डरीक प्रमादक ।
पुष्पाण्डक शीतभीरु काञ्चन शकुनाहृत ॥५॥
पाण्डुगौर शारिवाख्यो रोध्रपुष्य सुगन्धक ।
हायनो दीर्घलातश्च महादूषकदूषको ॥ ६ ॥
शालयो मधुरा स्निग्धा बल्या बद्धाल्पवर्चस ।
पित्तघ्नाल्पानिलकफा मूत्रला लघवो हिमा ॥७॥
रक्तशालिर्वरस्तेषा बल्यो वर्ण्य स्त्रिदोषजित् ।
चक्षुष्यो मूत्रल स्वर्य शुक्रलस्तृट्ज्वरापह ।
विषव्रणघ्न किञ्चित्तस्मादल्पगुणा पर ॥८॥
महाशालिर्हि ष्यो बल्यो रक्तशालिगुणै सम ॥९॥
कार्मुक पोत आमोदो लघु हृ्यो मुकुन्दक ।
महाषष्टिककेदार पुण्याङ्कुरवकादय ॥१०॥
षष्टिका मधुरा शीता लघवो बद्धवर्चस ।
वातपित्तप्रशमना शालीना सदृशा गुणै ॥११॥
षष्टिक प्रवरस्तेषा लघु स्निग्ध स्त्रिदोषजित् ।

पाके स्वादुर्मृदुग्राही स्थैर्यकारी बलप्रदः ॥१२॥
रक्तशालिगुणैस्तुल्यास्तस्मादल्पगुणाः परे ॥१३॥
कृष्णव्रीहिस्तुरितकः कुक्कुटाण्डकपाटलः ।
शलायुश्च राजीवाक्षो नन्दी जतुमुखादयः ॥१४॥
व्रीहयो मधुराः शीताः षष्टिकानां गुणैः समाः ॥१५॥
कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे ॥१६॥
शालयो दग्धमृज्जाता लघु रूक्षाः कफापहाः ।
स्थूलजाः स्वादवः पित्तकफघ्ना वातवह्निदाः ॥१७॥
केदारा वातपित्तघ्ना गुरवः कफशुक्रलाः ॥१८॥
रोप्यातिरोप्या लघवो मूत्रलास्ते गुणोत्तराः ॥१९॥
छिन्नरूढा हिमा रूक्षाः पित्तघ्ना लघुपाकिनः ॥२०॥
पुनर्विशोषितं सम्यग्घर्मे रूक्षं लघु स्मृतम् ॥२१॥
दीपनं पाचनं मेध्यं वातश्लेष्महरं परम् ।
व्रीहित्वं षष्टिकस्यापि भिन्नत्वं शीघ्रपाकतः ॥२२॥

अथ गोधूमनामगुणाः ।

गोधूमः सुमनः क्षुद्रो मधूली रूपशीतला ॥२३॥
नन्दीमुखोऽल्पगोधूमो लोकेशो पामिकोच्यते ॥२४॥
गोधूमो मधुरः शीतो वातपित्तहरो गुरुः ।
कफशुक्रप्रदो बल्यः स्निग्धः सन्धानकृत् सरः ।
जीवनो बृंहणो वर्ण्यः स्यन्दी रुच्यो स्थिरत्वकृत् ॥२५॥
मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः ।
शुक्रला बृंहणी पथ्या तद्वन्नन्दीमुखी मता ॥२६॥
एतस्मात् स्थूलगोधूमात् क्षुद्रो हीनतरो गुणैः ॥२७॥

अथ यवनामगुणाः ।

यवः शूकिस्तीक्ष्णशूको निःशूकोऽतियवोऽपरः ॥२८॥
यवः कषायो मधुरः शीतः पित्तकफास्रजित् ॥२९॥

व्रणेषु तिलवत्पथ्यो रूक्षो मेधाग्निवर्द्धनः।
लेखनो बद्धनिस्यन्दः स्पर्शी मेहहरः परः ॥३०॥
बहुवातमलः स्थैर्यवर्णकारी च पिच्छिलः।
अस्मादल्पतिलः किञ्चिद् गुणैन्यूनतरः स्मृतः ॥३१॥

अथ शिम्बीनामगुणाः तद्भेदाश्च।

शिम्बी मुद्गयवौ माषः सतीनः सकलायकः।
मसूरचणकमकुष्ठौ मकुष्ठत्रिपुटादयः ॥३२॥
वैदला मधुरा रूक्षाः कषायाः कटुपाकिनः।
वातला कफपित्तघ्ना बद्धमूत्रमलाः हिमाः ॥३३॥
ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारकाः।
शिम्बी विष्टम्भिनी मेहदृष्टिघ्ना वातपित्तला ॥३४॥
विशदा गुरवो हृद्या रूक्षाः कटुविपाकिनः ॥३५॥
सितासितादिभेदेन बहुधास्ते प्रकीर्त्तिताः ॥३६॥

अथ मुद्गनामगुणाः तद्भेदाश्च।

मुद्गो बलाढ्यो मङ्गल्यो हरितः शारदोऽपरः।
पीतः प्रचेतो बलाको माधवः परिकीर्त्तितः ॥३७॥
वनमुद्गस्तुवरको राजमुद्गस्तु खण्डकः ॥३८॥
मुद्गो रूक्षो लघुर्ग्राही कफपित्तहरो हिमः।
स्वादुरल्पानिलो नेत्र्यो वर्णोऽप्ये तद्गुणः स्मृतः ॥३९॥
हरितः प्रवरस्तेषां तच्छाकं तिक्तमुत्तमम् ॥४०॥

अथ माषनामगुणाः।

माषो जीर्णकरो धारो धवलो राजमाषकः ॥४१॥
माषो गुरुः स्वादुपाकः स्निग्धो रुच्योऽनिलापहः।
स्रंसनस्तर्पणो बल्यः शुक्रलो बृंहणः परः ॥४२॥
भिन्नमूत्रमलः स्तन्यः मेदपित्तकफप्रदः।
गुदकीलार्दितश्वासपङ्क्तिशूलानि नाशयेत् ॥४३॥

अथ राजमाषनामगुणा ।

राजमाष स्वादुरूक्ष कषायस्तर्पणो लघु ।
ग्राही वातकफस्तन्यबहुवर्चोरुचिप्रद ॥४४॥

अथ मकुष्ठनामगुणा ।

मकुष्ठो वनमुद्ग स्यात् मकुष्ठकमुकुष्ठकौ ॥४५॥
मकुष्ठो वातलो ग्राही कफपित्तहरो लघु ।
वह्निजिन्मधुर पाके क्रमिकृज्ज्वरनाशन ॥४६॥

अथ निष्पावनामगुणा ।

निष्पावोऽनिलपित्तास्रमूत्रस्तन्यकर सर ।
विदाह्युष्णो गुरु श्लेष्मशोफहृत् शुक्रनाशन ॥४७॥

अथ सतीननामगुणा ।

वर्तुलस्तु सतीन स्यात् हरेणु स्वल्पवर्तुल ॥४८॥
वर्तुल शीतलो ग्राही कफपित्तहरो लघु ।
विपाके मधुरो रूक्षो हरेणुस्तद्गुण स्मृत ॥४९॥

अथ कलायनामगुणा ।

कलाय खण्डिक प्रोक्तस्त्रिपुट क्षुद्रखण्डिक ॥५०॥
कलाय कफपित्तघ्नो ग्राही शीतोऽतिवातल ।
त्रिपुटोऽपि गुणैरेव तच्छाक कफपित्तजित् ॥५१॥

अथ चणकनामगुणा ।

चणको हरिमन्थ स्यात् वाजिमन्थश्च जीवन ॥५२॥
चणक शीतलो रूक्षो रक्तपित्तकफापह ।
लघु कषायो विष्टम्भी वातल कुष्ठनाशन ॥५३॥

अथ मसूरनामगुणा ।

मसूरिकारिर्मसूरिर्मङ्गल्या पाण्डुरापल ॥५४॥
मसूरिर्मधुर पाके सग्राही शीतलो लघु ।
कफपित्तास्रजिद्रूक्ष तच्छाक लघु तिक्तकम् ॥५५॥

अथ कुलत्थनामगुणाः ।

कुलत्थयक्षकश्रकः कुल्माली वनजोऽपरः ॥५६॥
अपरा दृक्प्रसादा च चक्षुष्या च कुलत्थिका ॥५७॥
कुल्माली लोचनहिता कुम्भकारी मलापहा ॥५८॥
कुलत्थः कटुकः पाके कषायो रक्तपित्तकृत् ।
लघुर्विदाही वीर्य्योष्णः श्वासकासकफानिलान् ।
हन्ति हिक्काश्मरीशुक्रदाहानाहान् सपीनसान् ॥५९॥
स्वेदसंग्राहको गुल्ममेदःक्रिमिहरः परः ॥६०॥
वन्यो विशेषतः प्रोक्तो नेत्रामयविषापहः ॥६१॥

अथ तिलनामगुणाः ।

तिलपुष्पस्त्रोत्रफलस्तिलपिञ्जोऽपरः स्मृतः ।
जातिलो वनजातः स्यादाढको तुवरी मता ॥६२॥
तिलः कषायो मधुरस्तिक्तकः कटुको रसे ।
विपाके कटुकः स्वादुः स्निग्धोष्णः कफपित्तलः ॥६३॥
बल्यः केश्यो हिमस्पर्शस्त्वच्यः स्तन्यो व्रणे हितः ॥६४॥
दन्त्योऽल्पमूत्रकृद्वातनाशनोऽग्निमतिप्रदः ॥६५॥
कृष्णः श्रेष्ठतमस्तेषु शुक्लो मध्यमः स्मृतः ।
अन्ये हीनतराः प्रोक्तास्तज्ज्ञैः रक्तादयस्तिलाः ॥६६॥

अथ तुम्बरीनामगुणाः ।

तुम्बरी ग्राहिणी शीता लघुः कफविपासजित् ॥६७॥

अथ अतसी(तिसि)नामगुणाः ।

अतसी मसृणा नीलपुष्पी चेत् सा उमा क्षुमा ॥६८॥
अतसी शुक्रदृष्टिघ्नी स्निग्धा वातास्रजिद् गुरुः ॥६९॥

अथ कुसुम्भनामगुणाः ।

कुसुम्भं पावकः पीतमलकं वस्त्ररञ्जनम् ॥७०॥
तद्बीजं वरटी गुर्वी स्यादुष्णा चानिलापहा ॥७१॥

कुसुम्भं वातलं कृच्छ्ररक्तपित्तकफापहम्।
वराव्यातसीवद्दिष्टा विशेषाद्दिमनाशिनी ॥७२॥

अथ सर्षपनामगुणाः।

सर्षपः कटुकः स्नेहो भूतघ्नो रचिताफलः।
तन्तुभोऽन्यः स उद्दिष्टः सिद्धार्थः श्वेतसर्षपः ॥७३॥
राजिका चासुरी राजी सुतीक्ष्णः कृष्णसर्षपः ॥७४॥
सर्षपः कफवातघ्न स्तीक्ष्णोष्णो रक्तपित्तकृत्।
किञ्चिद्रुक्षोऽग्निदः कण्डू कुष्ठकोष्ठक्रिमीन् हरेत् ॥७५॥
राजिकास्तद्गुणा ज्ञेयास्तीक्ष्णास्तीव्रा विशेषतः ॥७६॥

अथ शणनामगुणाः।

शणः शोक्ती मातुलानी तन्तुतन्तुर्महाशणः ॥७७॥
शणो हिमो गुरुर्ग्राही ततपुष्पं प्रदरास्रजित् ॥७८॥

अथ क्षुद्रधान्यनामगुणाः।

कङ्गुश्यामाकनीवारवरकोद्दालनर्त्तकाः।
वरट्टिका तोदपर्णी कोद्रवश्च मधुलिका ॥७९॥
नन्दीमुखो वेणु यवा प्रियङ्गुः कोरदूषकः।
गवेधुका नली माली मुकुन्द वारिकादिकम् ॥८०॥
तृणधान्यं लघु स्वादु कटुपाकि विलेखनम्।
रूक्षोष्णं बहुनिस्यन्दं वातपित्तप्रकोपणम् ॥८१॥
पीततण्डुलिका कङ्गुः प्रियङ्गुः कर्कटो मता ॥८२॥
सितकङ्गुस्तु मुसटी रक्तकङ्गुस्तु शोधिका ॥८३॥
घोनकः काककङ्गुः स्यात् श्यामाकः शणकङ्गुकः ॥८४॥
शाल्यादयः कङ्गुभेदाः कोद्रवः क्रुरसः स्मृतः ॥८५॥
कोद्रवः कोरदूषः स्यादुद्दालो वनकोद्रवः ॥८६॥
प्रियङ्गुः पित्तजित् हृष्यो भग्नसन्धानकृद् गुरुः ॥८७॥
श्यामाकः शोषणः शीतो रूक्षः पित्तकफापहः ॥८८॥

कोद्रवः वातलो ग्राही विषपित्तकफान् जयेत् ॥८८॥

अथ नीवारनामगुणाः।

नीवारः कांडकानाडी मुनिव्रीहिर्मुनिप्रियः ॥९०॥
नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत् ॥९१॥

अथ यवनालनामगुणाः।

यवनालो देवधान्यं जूर्णाह्वो जूनलो मतः ॥९२॥
यवनालः स्वादु शीतो वातलः कफपित्तजित् ॥९३॥

अथ गवेधुकानामगुणाः।

गवेधुका कर्षणी स्यात् गोजिह्वा कर्षिणी मता ॥९४॥
गवेधुका कटुः स्वाद्वी कार्श्यकृत् कफनाशिनी ॥९५॥

भत्नपरिभाषा।

अपर्य्याप्तं व्याधिहतमनार्त्तवमभूमिजम्।
नवं जन्त्वादिभिर्दुष्टं न धान्यं गुणवन्मतम् ॥९६॥
धान्यं नवमभिष्यन्दि गुरु स्वादु कफप्रदम् ॥९७॥
वर्षोषितं सर्वधान्यं गौरवं परिमुञ्चति ॥९८॥
न मुञ्चति तदा वीर्य्यं क्रमात् मुञ्चत्यतः परम्।
विदाहि गुरु विष्टम्भि विरूढं दृष्टिदूषणम् ॥९९॥
एतेषु यवगोधूमतिलमाषा नवा हिताः।
रूक्षाः पुराणा विरसा न तथा गुणकारिणः ॥१००॥

इति धान्यवर्गो दशमः।

—०—

## अन्नादिवर्गः।

राधा हरिं चरणयोः पतितं कराभ्यां
कोपाक्षधान तमुदीक्ष्य पुनर्हसन्तम्।
तत्पादयोः सभयचकिताभियाता-

सुत्थापयन् जयति कैतवगोपवेष: ॥१॥

अथ आहारनामगुणा:।

आहारो भोजनं जग्धिर्निल्यसो जीवनं तथा ॥२॥

आहारो बलकृत् सद्य:प्रीणनो देहधारक:।

ओजस्तेज:स्मरोत्साहधृतिस्मृतिमतिप्रद: ॥३॥

अथ भक्तनामगुणा:।

भक्तमन्धस्तु भिस्साऽऽहरं दीदिविरोदन: ॥४॥

भक्तं वह्निकरं पथ्यं तर्पणं मूत्रलं लघु ॥५॥

सुधौतं प्रस्तुतं चोष्णं विशदं गुणवन्मतम् ॥६॥

अधौतमसुतं शीतं गुरु रुच्यं कफप्रदम् ॥७॥

भ्रष्टतण्डुलजं रुच्यं सुगन्धि कफजिल्लघु ॥८॥

भक्तं मांसं फलं चीरं वेदलाम्लादिसाधितम्।

स्नेहमार्षैर्गुरुतरं हृद्यं बल्यं कफप्रदम् ॥९॥

रसौदनो गुरुर्हृद्यो बल्यो वातज्वरापह: ॥१०॥

घोलभक्तं ग्रहण्यर्श:श्रमघ्नं पाचनं हिमम् ॥११॥

अत्युष्णानां बलहरं शीतमुष्णाच दुर्जरम्।

अतिक्लिन्नं ग्लानिकरं दुर्जरं तण्डुलान्वितम् ॥१२॥

सौमनस्यं अन्नं पुष्टिसुखाढ्यं हर्षणं सुखम् ॥१३॥

स्वादु सन्नयेदन्नं मांसस्वादु विपर्ययम् ॥१४॥

अथ यवागूरादिलक्षणम्।

यवागू: षड्गुणे तोये संसिद्धा विरलद्रवा ॥१५॥

चतुर्गुणे तु संसिद्धा विलेपी घनसिक्थिका ॥१६॥

पेया सिक्थान्विता तोये चतुर्दशगुणीकृता ॥१७॥

मण्डश्चतुर्दशगुणे सिद्धस्तोये त्वसिक्थक: ॥१८॥

अथ यवागूगुणा:।

यवागूर्ग्राहिणी हृद्या ज्वरघ्नी बस्तिशोधनी ॥१८॥

अथ विलेपीगुणाः।

विलेपी दीपनी वल्या हृद्या संग्राहिणी लघुः।
व्रणाक्षिरोगिणां पथ्या तर्पणी तृड्ज्वरापहा ॥२०॥

अथ पेयागुणाः।

पेया कुक्षिगदक्लान्तिज्वरस्तम्भातिसारजित्।
रुच्याग्निकृल्लघुर्दीपमलस्वेदानुलोमनी ॥२१॥

अथ मण्डगुणाः।

मण्डो ग्राही लघुः शीतो दीपनो धातुसाम्यकृत्।
स्रोतोमार्दवकृत् पित्तज्वरघ्नः श्रमापहः ॥२२॥

अथ वाट्यमण्ड लाजमण्डनामगुणाः।

वाट्यमण्डो यवैर्भृष्टैर्लाजमण्डस्तु शालिभिः ॥२३॥
वाट्यमण्डो लघुर्ग्राही शूलानाहविदोषजित्।
नवज्वरेऽपि पथ्योऽयं पटोलमगधान्वितः ॥२४॥
लाजमण्डो लघुर्ग्राही सद्यः पाचनदीपनः ॥१५॥

अथ अष्टगुणमण्डनामगुणाः।

तण्डुलैरर्धमुद्गाङ्गैः किञ्चिद्भृष्टैस्तु पाचितैः।
हिङ्गुसिन्धूत्थधनिकापवत्रिकटुसंस्कृतः ॥२६॥
ज्ञेयः सोऽष्टगुणो मण्डो ज्वरदोषत्रयापहः।
रक्तः क्षुद्बोधकः प्राणदीपनः शीतलो लघुः ॥२७॥

अथ मुद्गयूषनामगुणाः।

यूषः स्मृतो वैदलानामष्टादशगुणेऽम्भसि ॥२८॥
मुद्गानामुत्तमो यूषो दीपनः शीतलो लघुः।
व्रणोर्ध्वजन्तुरुग्दाहकफपित्तज्वरास्रजित् ॥२८॥

अथ दाडिमामलकयूषनामगुणाः।

दाड़िमामलकैर्यूषः पित्तवातहरो लघुः ॥३०॥

अथ मुद्गामलकयूषनामगुणाः ।

मुद्गामलकैर्यूषस्तु भेदनः कफपित्तजित् ।
तृड्दाहशमनः शीतो मूर्च्छाश्रममदापहः ॥३१॥

अथ कुलत्थयूषनामगुणाः

कुलत्थयूषो गुल्मार्शःकफवाताश्मशर्कराः ।
तूणीप्रतूणीमेदांसि निहन्ति त्वग्निकृत् सरः ॥३२॥

अथ मूलकयूषनामगुणाः ।

सूष्ममूलकतो यूषो गलामयहकफज्वरान् ।
हन्ति श्वासप्रतिश्यायकासमेदोऽरुचिभ्रमान् ॥३३॥

अथ चणकयूषनामगुणाः ।

चणकैर्विहितो यूषोऽसुष्णस्तुवरको लघुः ।
रक्तपित्तप्रतिश्यायकासपित्तकफापहः ॥३४॥

अथ मकुष्ठयूषनामगुणाः ।

मकुष्ठयूषः संग्राही पित्तघ्नो ज्वरापहः ।
लघुः सन्तर्पणः पथ्यो हृद्यः पीनसकासजित् ॥३५॥

अथ कृताकृतयूषनामगुणाः ।

यूषः कृताख्योऽलवणः स्नेहहाद्यविसाधितः ॥३६॥
अकृतस्तैर्विना सिद्धः क्रमाद् गुरुलघू च तौ ॥३७॥

अथ यूषसामान्यनामगुणाः ।

यूषा गोरसधान्याम्लफलाम्लादिभिरन्विताः ।
यथोत्तरं गुरुतरा यानघ्ना रुचिकारिणः ॥३८॥
येरन्ये रोगधैर्यैव कृता भण्डादयो बुधैः ।
विचार्य मद्गुणानेतांस्तद्गुणानेव निर्दिशेत् ॥३९॥

अथ सूप्यनामगुणाः ।

सूप्यस्तु सूप्यको सृष्टः शिम्बीजैर्निस्तुषैः कृतः ॥४०॥

सूप्य विष्टम्भि रुच स्यात् निरस्त्वन्तु विशेषत ।
निस्तुष भृष्टसिद्ध तल्लाघव सुतरा व्रजेत् ॥४१॥

अथ कृशरानामगुणा ।

कचित्समापे काप्येव कृशरा तिलतण्डुले ।
कृशरा बलकृद् ग्राह्या सिद्धा तण्डुलवैदले ॥४२॥
कृशरा शुक्रला बल्या गुरु पित्तकफप्रदा ।
दुर्जरा बुद्धिविष्टम्भमलकृद्वातनाशिनी ॥४३॥

अथ चिप्रानामगुणा ।

चिप्राऽपि तद्गुणा सेया सुधान्यगुणकारिणी ॥४४॥

अथ चौरेयोनामगुणा ।

चौरेयी परमान्न स्यात् पायस चौरतण्डुलै ॥४५॥
चौरेयो दुर्जरा बल्या धातुपुष्टिप्रदा गुरु ।
विष्टम्भिनी हरेत् पित्तरक्तव्याग्निमारुतान् ॥४६॥

अथ राजखाण्डवादिनामगुणा ।

गुडादिपक्व कथितमाममाम्रफल पुन ।
क्षेडैलानागरैर्युक्त ज्ञातव्यो राजखाण्डव ॥४७॥
सिताद्यकसिन्धूत्थै सहचाम्रपक्वके ।
निम्बूफलरसैर्युक्तो रागो राजिकया कृत ॥४८॥
खाण्डवा मधुराम्लादिरससंयोगसम्भवा ।
दीपना हृद्या रुच्यास्तीक्ष्णा हृद्या श्रमापहा ॥४९॥

अथ खण्डाम्र खण्डामलकनामगुणा ।

आम्रामलकलेशाद्या हृद्या बुद्धिबलप्रदा ।
तर्पणा रोचना स्निग्धा मधुरा गुरवस्तथा ॥५०॥

अथ रसालानामगुणा ।

ससित दधिमथ्याग्यमरिचैलादिसस्कृतम् ।

मथितं कान्तमानिन्या कर्पूरपरिवासितम् ॥५१॥
रसाला शिखरा प्रोक्ता मार्जिका माज्विका बुधैः ॥५२॥
रसाला शुक्रला वल्या रोचनी वातपित्तजित्।
स्निग्धा गुरुः प्रतिश्यायं विशेषेण विनाशयेत् ॥५३॥

अथ पाननामगुणाः।

द्राक्षाम्लिकापरूषादिजलं खण्डादिमिश्रितम्।
मरिचार्द्रककर्पूरधातुजातादिसंस्कृतम्।
पानकं द्विविधं तस्मादम्लानम्लविभेदतः ॥५४॥
द्राक्षाखर्जूरकाश्मर्यमधूकपरूषकैः।
पञ्चसाराभिधं पानं चन्द्रसूर्याधिवासितम् ॥५५॥
पानकं मूत्रलं हृद्यं प्रीणनन्तु श्रमापहम्।
यथा द्रव्यगुणं तत् तु गुरु लघ्वादि निर्दिशेत् ॥५६॥
पञ्चसाराभिधं पिण्डं तृड्दाहश्रमापहम् ॥५७॥
मृद्वीकं श्रमदाहार्त्तपित्तक्लमक्षयापहम्।
रुचिकृत् कोमलं हृद्यं पाचनञ्च बलप्रदम् ॥५८॥
चञ्चिकाया रसस्तृष्णाक्लमदाहश्रमापहः ॥५९॥

अथ सट्टकनामगुणाः।

निःस्नेहं दधि निर्मथ्य पचेत् शर्करयान्वितम्।
मध्वोपदाड़िमाद्याजिः सट्टकोऽयमुदाहृतः ॥६०॥
सट्टको रोचनः स्वर्यः पित्तानिलहरो गुरुः।
दीपनस्तर्पणो वल्यः श्रमक्लमक्षयापहः ॥६१॥

अथ पोलिकादिनामगुणाः।

कुर्यात् समितयाऽतीव तन्वी पर्पटिका मता।
खेदयेत् तप्तके तान्तु पोलिकां तां सगुडिकाः।
तां खादेत् सपूसिकायुक्तां तस्या मण्डकवत् गुणाः ॥६२॥

मण्डकः सूचितः सूक्ष्मः कर्पूरादिषु पाचितः ॥६३॥
स एव किञ्चिच्छूलस्तु बुधैः पूपालिका मता ॥६४॥
अङ्गारकर्कटो सैव विज्ञेयाङ्गारयाचितः ॥६५॥
अत्युष्णो मण्डकः पथ्यः शीतः स गुरुरुच्यते ॥६६॥
अङ्गारमण्डको ग्राही लघुर्दोषत्रयापहः ॥६७॥
पोलिका कफकृद्‌ बल्या पित्तला वातनुद्‌ गुरुः ॥६८॥
अङ्गारकर्कटो बल्या बृंहणो शुक्रला लघुः।
दीपनो कफहृद्रोगपीनसश्वासकासजित्‌ ॥६९॥

अथ शालिभक्ष्यनामगुणाः।

शालिपिष्टकृता भक्ष्या नातिबल्या विदाहिनः।
सहृद्या गुरवः श्लेषकफपित्तप्रकोपणाः ॥७०॥

अथ गोधूम-वैदलाभक्ष्यनामगुणाः।

गोधूमविहिता भक्ष्या बल्याः पित्तानिलापहाः ॥७१॥
वैदला वातला भक्ष्या गुरवस्तुवरा हिमाः ॥७२॥

अथ माषभक्ष्यादिनामगुणाः।

माषपिष्टकृता भक्ष्या बल्याः पित्तकफप्रदाः ॥७३॥
विचार्यौषगुणान् भक्ष्यानन्यानपि विनिर्दिशेत्‌ ॥७४॥

अथ गुडयुक्तभक्ष्यनामगुणाः।

गौड़िका गुरवो भक्ष्या वातघ्ना कफशुक्रलाः ॥७५॥

अथ घृतपक्वभक्ष्यनामगुणाः।

घृतपाचितभक्ष्यास्तु बल्याः पित्तकफापहाः ॥७६॥

अथ तैलपक्वभक्ष्यनामगुणाः।

तैलजा दृक्समीरघ्नास्तूष्णपित्तास्रदूषणाः ॥७७॥

अथ दुग्धभक्ष्यनामगुणाः।

दुग्धलोडितगोधूमशालिपिष्टादिनिर्मिताः ॥७८॥
वातपित्तहरा भक्ष्या हृद्याः शुक्रबलप्रदाः ॥७९॥

अथ घृतपूरनामगुणाः।

क्षीरेण मर्दितं चूर्णं गोधूमानां सुगालितम्।
विस्तार्य सर्पिषा युक्तं ततः खण्डविमिश्रितम्।
घृतपूरोऽयमुद्दिष्टः कर्पूरमरिचान्वितः॥८०॥
समितो मर्दितः क्षीरनारिकेलसितादिभिः।
अवगाह्य घृते पक्वो घृतपूरोऽपरः स्मृतः॥८१॥
घृतपूरो गुरुर्वृष्यो हृद्यः पित्तानिलापहः।
सद्यःप्राणप्रदो बल्यः क्षतजिद् बृंहणः परः॥८२॥

अथ संयावनामगुणाः।

समितां सर्पिषा भृष्टां खण्डां मरिचमिश्रिताम्।
एलालवङ्गकर्पूरचूर्णादिपरिसंस्कृताम्॥८३॥
क्षिप्त्वान्यसमितालम्बपुटेषु सुदृढे पचेत्।
ततः खण्डे न्यसेत् पक्वं संयावोऽयमुदाहृतः॥८४॥
समिता मधुदुग्धेन मर्दयित्वा सुशोभनम्।
पचेद् घृतोत्तरे खण्डे न्यसेत् पक्वे नवे घटे॥८५॥
ततो मरिचचूर्णैलाखण्डचूर्णावचूर्णितम्।
कुर्यात् कर्पूरसंयुक्तं संयावममृतोपमम्॥८६॥

अथ मधुशीर्षकनामगुणाः।

मर्दयित्वा तु समितामपूपास्तनवः कृताः।
पक्वा घृतेऽसिते पाके मण्डिता मधुशीर्षिका॥८७॥
घृतेन मर्दितान्तोयैः समितां मृदु मर्दयेत्॥८८॥
मातुलुङ्गत्वचा खण्डिपक्वनार्द्रकपूरितम्।
विधाय पूपकं वृत्तं गन्धाढ्यं केशरान्वितम्॥८९॥
पक्वः सर्पिषि खण्डे च समितो मधुशीर्षकः॥९०॥

अथ मृदुपूपकनामगुणाः।

समितां गुडतोयेन मेलयित्वा सुगालितम्।

घृते विस्तार्य्य विपचेत् सुवृत्तान् मृदुपूपकान् ॥९१॥

अथ दधिपूपकनामगुणाः।

शालिपिष्टं युतं दध्ना मर्दयित्वा घृते पचेत्।
वेष्टयेत् पक्वखण्डेन सुवृत्तान् दधिपूपकान् ॥९२॥

अथ विस्यन्दनामगुणाः।

संयावा मधुशीर्षाख्याः पूपका दधिसम्भवाः ॥९३॥
गुरवो बृंहणा हृद्या वृष्याः पित्तानिलापहाः ॥९४॥
एते संस्कारभेदेन विविधास्तेऽपि तद्गुणाः ॥९५॥
दधिक्षीरसमे पक्वा त्वर्द्धभागावशेषिते।
आपचेद्रक्तशालीनां तण्डुलान् तिलसंयुतान् ॥९६॥
प्रियालपनसादीनां बीजमुष्टिं समापचेत्।
क्षीरतुल्यं घृतञ्चैव शर्करा चैव तत्समा ॥९७॥
सिद्धस्त्रिकटुकोपेतः कर्पूरेणाधिवासितः।
एष विस्यन्दनो नाम देवलोकेऽपि दुर्लभः ॥९८॥
यस्मात् पक्वेऽपि हि घृतं स्यन्दते सर्वतोमुखम्।
तस्मात् सूपविधानज्ञैर्विस्यन्दो विधिवत् स्मृतः ॥९९॥
विस्यन्दो बृंहणो हृद्यः पित्तानिलहरो गुरुः ॥१००॥

अथ लप्सि(मोहनभोग)नामगुणाः।

समितां भर्जयेत् तप्ते घृते न्यस्तां ततो न्यसेत्।
वारिमिश्रादिसंयुक्तां पयसा योजयेत् तदा ॥१०१॥
एषैलादियुता तज्ज्ञैर्लप्सिका ललिता मता ॥१०२॥
लप्सिका बृंहणो हृद्या वातपित्तहरा गुरुः ॥१०३॥

अथ फेनीनामगुणाः।

फेनिका पुष्टिदा शुभ्रा वातपित्तहरा लघुः ॥१०४॥
लक्षणं फेनिकादीनां सूपशास्त्रात् विचारयेत् ॥१०५॥

अथ मोदकनामगुणाः।

मोदका लड्डुकाः प्रोक्तास्ते चानेकविधा मताः ॥१०६॥
तेषामन्नत्वप्राप्तानां न्यसेद् गोधूमगालिताम् ॥१०७॥
दधि क्षीरं मुष्टियुक्तं समिता माषपिष्टकः।
शूरणार्द्रककुष्माण्डशालूकामिषमत्स्यकाः ॥१०८॥
इत्यादिभिर्बहुविधाः कल्पास्ते सूपयास्ततः।
द्रव्यं विचार्य मतिमान् तद्गुणानपि निर्दिशेत् ॥१०९॥
मोदका दुर्जरा हृद्या बलदाः पित्तानिलापहाः ॥११०॥

अथ माषवटकनामगुणाः।

माषमुद्गादिपिष्टोत्थाः कटुकाः वटिकादयः।
तत्कारणगुणान् ज्ञात्वा तद्गुणानपि निर्दिशेत् ॥१११॥
माषाणां वटको हृद्यो बल्यो वातहरो गुरुः।
विष्टम्भी घोलवटको विदाही पवनापहः ॥११२॥

अथ शाण्डकवटकनामगुणाः।

शाण्डको वटको दृष्टिनाशनो दोषलो गुरुः ॥११३॥

अथ तुषाम्बु-कुण्डलीवटकनामगुणाः।

तुषाम्बुवटको रुच्यः पित्तलः कफवातजित् ॥११४॥
कुण्डली शर्करा रुच्या विष्टम्भी कफवातहृत् ॥११५॥

अथ सोमालिकानामगुणाः।

सोमालिका गुरुर्हृद्या रोचनो पित्तनाशिनी ॥११६॥

अथ कुण्डलिकानामगुणाः।

द्विप्रस्थां शुद्धसमितां प्रस्थ गोधूमगालितम्।
विमर्द्य पयसा स्थाप्यं व्रजेद्यावत्तदम्लताम् ॥११७॥
सच्छिद्रे नारिकेलस्य पात्रे निक्षिप्य निर्मले।
परिभ्राम्य घृते तप्ते मन्दाग्नौ तु विपाचयेत् ॥११८॥
कर्पूरवासिते पक्वे विज्ञेया नृपवल्लभा।

सुपक्वा कङ्कणाकारा सिताछेहे विनिक्षिपेत् ॥११९॥
सा तु कुण्डलिका नाम्ना पुष्टिकान्तिबलप्रदा ।
धातुवृद्धिकरी हृष्या हृद्या चेन्द्रियतर्पणी ॥१२०॥
तस्यामस्तत्वमासाद्य न्यसेद्गोधूमगालिताम् ॥१२१॥

अथ कुल्माषानामगुणाः ।

गोधूमाद्यास्तु कुल्माषा यद्दश्वित्र मताः क्वचित् ॥१२२॥
कुल्माषा गुरवो रूक्षा वातला भिन्नवर्चसः ॥१२३॥

अथ मन्थनामगुणाः ।

शक्तवस्तु घृताऽभ्यक्ताः शीतवारिविलोडिताः ।
नातिद्रवो नातिसान्द्रो मन्थ इति प्रकीर्त्तितः ॥१२४॥
मन्थो बलकरः सद्यः परिणामे बलावहः ।
मोहतृष्णाक्षयच्छर्दिकुष्ठदाहश्रमान् जयेत् ॥१२५॥
द्राक्षा सितेक्षुखर्जूरमिश्रः पित्तामदाहजित् ॥१२६॥
द्राक्षा मधुयुता बल्या कफश्रममदापहा ॥१२७॥
वर्गत्रयसमायुक्ता दोषवर्चोऽनुलोमतः ॥१२८॥

अथ शक्तुनामगुणाः ।

नवीननिस्तुषोद्भृष्टा यवचूर्णञ्च शक्तवः ॥१२९॥
शक्तवो यवजाः शीता दीपना लघवः सराः ।
कफपित्तहरा रूक्षा लेखना पानतस्तु ते ॥१३०॥
सद्यो बलप्रदा पथ्या घर्मादिक्लान्तदेहिनः ॥१३१॥
निस्तुषैश्चणकैर्भृष्टैस्तुर्य्यांशैश्च यवैः कृताः ।
शक्तवः शर्करासर्पिर्युक्ता ग्रीष्मेऽतिपूजिताः ॥१३२॥
पिण्डी प्रोक्ता गुरुस्ते या द्रवत्वाल्लेहिका लघुः ॥१३३॥
*न भुक्त्वा न रदैश्छित्त्वा न निशायां न वा बहून् ।*
न जलान्तरितान्दोषान् शक्तूनद्यात् न केवलान् ॥१३४॥

अथ लाजादिनामगुणाः।

भृष्टाशाल्यादिजा लाजा धानाः भृष्टयवोद्भवाः ॥१३५॥
लाजा लघुतराः शीता बल्याः पित्तकफच्छिदः।
छर्द्यतीसारदाहास्रमेहमेदस्तृषापहाः ॥१३६॥
धानाः विष्टम्भिनो रूक्षा कफमेदोहरा गुरुः ॥१३७॥

अथ पृथुकानामगुणाः।

पक्वार्द्रा व्रीहयः सम्यक् पीड़िताः पृथुका मताः ॥१३८॥
पृथुका गुरवो बल्याः श्लेष्मला वातनाशनाः ॥१३९॥

अथ होलकनामगुणाः।

शमीधान्यैरर्धपक्वैः सुभृष्टैर्होलको मतः ॥१४०॥
होलकोऽल्पानिलो मेदःकफदोषत्रयापहः ॥१४१॥

अथ लम्बीनामगुणाः।

अपक्वभृष्टैर्गोधूमैरुक्ताबोलम्बलम्बिका ॥१४२॥
लम्बी कफप्रदा बल्या लघुः पित्तानिलापहा ॥१४३॥

अथ परिशुष्कादिमांसनामगुणाः।

हिङ्गुपक्वे घृते दत्त्वा मांसमालोड्य भर्जितम्।
माषयोष्णाम्बु निक्षिप्य पचेत्सम्यक् विचक्षणः ॥१४४॥
मरिचार्द्रकसंयुक्तं सुगन्धिद्रव्यवासितम्।
गतद्रवं सुधातुल्यं परिशुष्कं तदुच्यते ॥१४५॥
घनद्रवोपलिप्तं तत् प्रदिग्धमिति कीर्त्त्यते ॥१४६॥
प्रदिग्धं कफजित् बल्यं गुरु शुक्रविवर्द्धनम् ॥१४७॥
रसेन युक्तं सरस शूल्य शूलेन संस्कृतम् ॥१४८॥
परिशुष्कं स्थिरं स्निग्धं रोचनं तर्पणं गुरु।
बलमेधाग्निमांसौजः शुक्रवृद्धिकरं परम् ॥१४९॥
तदेवोक्षिप्तपिष्टत्वात् उल्लिप्तं परिकीर्त्त्यते ॥१५०॥
उल्लिप्तं गुरु पथ्यं तत् परिशुष्कसमं गुणैः ॥१५१॥
भरमं तद्गुणं ज्ञेयं विशेषाल्लघु दीपनम् ॥१५२॥

प्रोतं शूलेन विद्धितं सौरभाद्यम्बुना सह ।
लिप्तं विधूमैरङ्गारैः पाचितं शूल्यमुच्यते ॥१५३॥
शूल्यं सर्वोत्तमं मांसं लघु पथ्योत्तमं मतम् ॥१५४॥

अथ अङ्गारप्रतप्तमांसगुणाः ।

अङ्गारादिषु यत्पक्वं प्रतप्तं तदुदाहृतम् ॥ १५५ ॥

अथ पिष्टमांसगुणाः ।

मांसं दाडिमसिन्धूत्थं सौरभादिसमन्वितम् ।
पिष्ट्वा पूपादिसदृश्या पक्वं पिष्टमिति स्मृतम् ॥१५६॥

अथ घृतादिसाधितमांसगुणाः ।

भर्जितं स्याद् घृतादौ तु भृष्टा यत्साधितं पुनः ॥१५७॥

अथ तन्दुपक्वमांसगुणाः ।

मांसं सौरभसंलिप्तं तन्दुपक्वं मधुप्रभम् ॥१५८॥

अथ तैलपक्वमांसगुणाः ।

प्रदिग्धं सरसं पक्वं भर्जितं मृदुपाचितम् ।
प्रतप्तं परिशुष्कञ्च शूल्यं यच्चान्यदोदृशम् ॥१५९॥
मांसं तैलेन सिद्धं तद् वीर्य्योष्णं गुरु पित्तलम् ॥१६०॥

अथ घृतपक्वमांसगुणाः ।

घृतपक्वं तदेव स्यात् लघु रुच्यमपित्तलम् ।
अत्युष्णं वीर्य्यबलदं हृद्यं दृष्टिप्रसादनम् ॥१६१॥

अथ तक्रादिपक्वमांसगुणाः ।

गोरसैर्द्धान्याम्लफलाम्लकटुकादिभिः ।
सिद्धं मांसं भवेद् बल्यं रोचनं दीपनं गुरु ॥ १६२ ॥

अथ शुष्कमांसगुणाः ।

मांसमतिरसं रूक्षं शुष्कं वातलं गुरु ॥१६३॥

अथ वेसवारगुणाः ।

गतास्थि मांसं शुष्कं पुनर्द्दृषदि पेषयेत् ।

व्योषादि संस्कृतं कृत्वा पचेद् भूयो घृतान्वितम् ।
वेसवारोऽयमुद्दिष्टो बल्यो वातहरो गुरुः ॥१६४॥
स्विन्नमुद्गादिकल्कोऽपि वेसवारोऽपरः स्मृतः ॥१६५॥
मुद्गादिवेसवारस्तु यथा द्रव्यगुणान् वदेत् ॥१६६॥

अथ सौरभनाम।

हरिद्राव्योषसिन्धूत्थहिङ्गुधान्यकदाडिमैः ।
साजाजीभिर्वेसवारः सौरभोऽयमुदाहृतः ॥१६७॥

अथ मांसरस-सौरसनाम।

पिष्टमांससमुद्भूतः स्मृतो मांसरसो रसः ॥१६८॥
सौरभः सौरसः स्यात् तु यो रसो लवणान्वितः ॥१६९॥

अथ खानिष्कनाम।

सयुक्तो वेसवारेण रसः खानिष्कमुच्यते ॥१७०॥

अथ मांसरसनामगुणाः।

रसो हृद्यः श्रमश्वासवातपित्तक्षयापहः ।
प्रीणनो व्रणयुक्तानां क्षीणानामल्परेतसाम् ॥१७१॥
विश्लिष्टभग्नसन्धीनां शुद्धानां शुद्धिकाङ्क्षिणाम् ।
शस्यते स्वरहीनानां दृष्टायुः श्रवणार्थिनाम् ॥१७२॥

अथ दाडिमयुक्तमांसरसनामगुणाः।

सदाडिमादिर्बलदो दोषघ्नस्तु क्षतस्तु सः ॥१७३॥

अथ सौरभादिगुणाः।

सौरभः प्रीणनः शीतो मुखशोषश्रमापहः ।
दीपनः क्लमवातघ्नः सर्वधातुविवर्द्धनः ॥१७४॥
खानिष्कस्तु गुरुः पथ्यो दोषाग्नीनां विशेषतः ।
अल्पमांसादिसंयुक्तो लवणाम्लविपाचितः ॥१७५॥
दकसावणिका ज्ञेया रसाद्या लघवो मताः ॥१७६॥
तक्रादिक्वाथसम्भृताः कथिका कथिता बुधैः ॥१७७॥

क्वथिका पाचनी हृद्या रुच्या वह्निप्रदा लघुः ।
कफानिलविबन्धघ्नी किञ्चित् पित्तप्रकोपनी ॥१७८॥

अथ क्वथितनामगुणाः ।

शाकं तक्रादिभिः सम्यक् साधितं क्वथितं मतम् ॥१७९॥
क्वथितं दीपनं रुच्यं वातश्लेष्मश्रमापहम् ॥ १८० ॥
त्यक्ता स्वहेतुशाकस्य गुणानेतद्गुणं भवेत् ॥१८१॥

अथ पर्पटनामगुणाः ।

पर्पटा लघवो रुच्या सघोयान् क्षारपर्पटः ॥१८२॥

अथ पिण्याकनामगुणाः ।

पिण्याकस्तिलकिट्टः स्यात् पललं तिलपिष्टकम् ॥१८३॥
पिण्याको लेखनो रूक्ष विष्टम्भी दृष्टिदूषणः ॥१८४॥

अथ पललनामगुणाः ।

पललं बृंहणं स्निग्धं कफपित्तकरं गुरु ॥१८५॥

अत्र परिभाषा ।

द्रव्यकाल क्रियायोगदेहादीनि विचार्य तु ।
अन्येषामप्यनुक्तानामेषामपि गुणान् वदेत् ॥१८६॥

इति भक्तादिवर्गः कृतान्नवर्गो वा
एकादश ।

---

## मांसवर्गः ।

मुखेन्दुपद्मप्रतिबोधलुब्धं विधुन्तुदालिभ्रममादधानम् ।
लक्ष्मीकपोलप्रतिबिम्बिताङ्गं नीलाञ्जनीलं कलयामि तेजः ॥१

अथ हस्तिनामगुणाः ।

हस्ती मतङ्गजो दन्ती मातङ्गोऽनेकपः करी ।
सिन्धुरः कुञ्जरः पद्मी वारणो द्विरदो द्विपः ।
इभो दन्तावलो नागः कुम्भी स्तम्बेरमो गजः ॥२॥

हस्तिनी धेनुका प्रोक्ता करेणुः करिणी च सा ॥३॥
हस्ती कफानिलौ हन्यादुष्णपित्तास्रकोपनः ॥४॥

अथ घोटकनामगुणाः।

घोटकः सैन्धवो वाजी तुरङ्गस्तुरगो हयः।
तुरङ्गमोऽश्वो गन्धर्वो वाहः सप्तिर्यतुर्जवी ॥५॥
घोटिका वडवा वामो प्रसूताश्वा च वाजिनी ॥६॥
घोटकः कटुकः पाके दीपनः कफपित्तहृत्।
वातहृद् बृंहणो बल्यश्चक्षुष्यो मधुरो लघुः ॥७॥

अथ अश्वतरनामगुणाः।

तज्जोवोढ्याश्वतरो शीघ्रवेगोऽङ्गपूजितः ॥८॥
बल्यमाश्वतरं मांसं बृंहणं कफपित्तलम् ॥९॥

अथ उष्ट्रनामगुणाः।

उष्ट्रः क्रमेलको वक्रग्रीवः शाखाशनो मयः।
शृङ्खलः करभो दीर्घजङ्घो धूम्रो मरुप्रियः ॥१०॥
उष्ट्रमांसं लघु स्वादु चक्षुष्यमनिलापहम्।
उष्ट्रमांसं प्रशमनं मेदःपित्तकफप्रदम् ॥११॥

अथ गर्दभनामगुणाः।

गर्दभो रासभो भारवाही दूरगमः खरः ॥१२॥
गार्दभं पित्तलं बल्यं बृंहणं कफपित्तहृत्।
कटु पाके लघु श्रेष्ठं तस्मात् वन्योखरोद्भवम् ॥१३॥

अथ महिषनामगुणाः।

महिषः सैरिभः शृङ्गी वाहवैरी घनाघनः।
कासरो गवलो दंशो लुलापः कालवाहनः ॥१४॥
माहिषं मधुरं मांसं स्निग्धोष्णं वातनाशनम्।
निद्रारेतोबलस्तन्यतनुदार्ढ्यकरं गुरु ॥१५॥
तद्वदारण्यजं विन्द्याद्विशेषाच्छोषिणे हितम् ॥१६॥

अथ भल्लूक गण्डकनामगुणाः ।
ऋचोऽच्छभल्लो भल्लूक खड्गो खड्गश्च गण्डक ॥१७॥
ऋच स्निग्धो गुरुर्बल्य स्वादूष्ण पवनापह ॥१८॥
गण्डको बद्धविण्मूत्रे पवित्रोऽनिलनाशन ॥१९॥
अथ सिंहशार्दूलयोर्नामगुणा ।
सिंह पञ्चाननो दीप्तो मृगेन्द्र केसरी हरि ॥२०॥
शार्दूल स्यात् पञ्चनखो मृगनाथ सलप्रज ॥२१॥
सिंहशार्दूलयोर्मांसमुष्ण वाताधिरोगजित् ॥२२॥
अथ व्याघ्रनाम ।
व्याघ्रो मृगारिर्गन्धा व्यालो भीमपराक्रम ॥२३॥
अथ चित्रकनाम ।
चित्रको वेगवाधिलो द्वीपी व्याहीवदग्रक ॥२४॥
अथ वृक तरच्छादिनामगुणाः ।
ईहामृगो वृक कोकस्तरचुस्तु मृगादन ॥२५॥
व्याघ्रचित्रतरचुणा वृकाद्या पलल गुरु ।
उष्ण वातहर स्वर्य्य हितमर्चिविकारिणाम् ॥२६॥
अथ कुक्कुरनामगुणाः ।
कुक्कुर शुनक श्वा स्यात्कौलेय सुनख शुन ।
सारमेय क्षतघ्नश्च भषको मृगदंशक ॥२७॥
अथ शूकरनामगुणाः ।
शूकरो रोमश पोत्री कोलो घोणि किरि किटि ।
दंष्ट्री क्रोष्टुस्तुद्दुरोमा भूदारश्च वराहक ॥२८॥
शौकर पिशित स्वादु बल्य वातापह गुरु ।
स्निग्धोष्ण शुक्रल रुच्य निद्रास्थूलत्वदार्ढ्यकृत् ॥२९॥
अथ छागनामगुणाः ।
छागी गलस्तनी मञ्जा सर्वभक्षा त्वजा स्तुभा ॥३०॥

सर्वारश्छागलश्छागो वस्तोयः कालकः पशुः ॥३१॥
छागमांसं लघु स्निग्धं स्वादुपाकं त्रिदोषजित्।
अदाहि बृंहणं नातिशीतं पीनसनाशनम् ॥३२॥
देहधातु समानत्वादनभिष्यन्दि बृंहणम् ॥३३॥

अथ मेष-मेदःपुच्छनामगुणाः।

मेषो भेडो हुडो मेढ्र उरभ्र उरणोऽविकः।
ऊर्णायुरेडको वृष्णिर्मेदःपुच्छस्तु दुम्बकः ॥३४॥
मेषमांसं गुरु स्निग्धं वल्यं पित्तकफप्रदम्।
मेदःपुच्छामिषं वृष्यं कफपित्तकरं गुरु ॥३५॥

अथ हरिणनाम।

हरिणस्ताम्रवर्णः स्यात् कुरङ्गश्चारुलोचनः।
सारङ्गोऽजिनयोनिश्च वातायुश्चलनो मृगः ॥३६॥

अथ एणनामगुणाः।

एणः कृष्णोऽपरः कृष्णकुरङ्गः कृष्णसारकः ॥३७॥
एणमांसं हिमं रुच्यं ग्राहि दोषत्रयापहम्।
पङ्कमं वलदं पथ्यं लघु हृद्यं ज्वरास्रजित् ॥३८॥

अथ गोकर्णशम्बरनामगुणाः।

गोकर्णो विकटश्रृङ्गो विन्द्यादन्यस्तु शम्बरः ॥३९॥
गोकर्ण शम्बरौ शीतौ गुरुस्निग्धौ कफप्रदौ।
रसे पाके च मधुरौ रक्तपित्तविनाशनौ ॥४०॥

अथ गवयनामगुणाः।

अरण्यो नीलाङ्को नीलो गवयश्चारुदर्शनः ॥४१॥
गवयो मधुरो वृष्यः स्निग्धोष्णः कफपित्तनः ॥४२॥

अथ कस्तूरीमुण्डिनोमृगनामगुणाः।

कस्तूरीहरिणी गन्धी मुण्डिनो मृगमातृका ॥४३॥
कस्तूरीहरिणः स्वादुर्वर्चोविट् दीपनो लघुः ॥४४॥

मुण्डिनो ज्वरकासास्रक्षयश्वासापहा हिमा ॥४५॥

अथ कृतमालादिनामगुणाः।

कृतमालो वर्णचरः पृषतो विन्दुचित्रकः।
वातप्रमीर्वातमृगः किकरः कृष्णपुच्छकः ॥४६॥
कृतमालादिजं मांसं मधुरं ग्राहि दीपनम्।
हृद्यं शीतं लघु श्वासज्वरदोषत्रयास्रजित् ॥४७॥

अथ रुरु-न्यङ्कुनामगुणाः।

रुरुः शरम्भुकमृगो न्यङ्कुर्बहुविषाणकः ॥४८॥
रुरोर्मांसं गुरु स्वादु हृद्यं पित्तानिलापहम् ॥४९॥
न्यङ्कुः स्वादुर्लघुर्बल्यो हृद्यो दोषत्रयापहः ॥५०॥

अथ शशनामगुणाः।

शशः शूली लोमकर्णो लम्बकर्णो विलेशयः ॥५१॥
शशः शीतो लघुः स्वादुर्ग्राही पथ्योऽग्निदीपनः।
सन्निपातज्वरश्वासरक्तपित्तकफापहः ॥५२॥

अथ महामृगनाम।

काश्मीरदेशे शरभोऽष्टपात् स्यात्
सलाङ्गुलार्यतुरुङ्गपादः।
उष्ट्रप्रमाणः समहाविषाणः
ख्यातो वनस्थः स मृगोमहाख्यः ॥५३॥

अथ शल्लक (सलारु)-मेधा नामगुणा.।

शल्लकः शलाका श्वावित् मेधास्यात्तु चिनी खरा ॥५४॥
शल्लकः श्वासकासास्रशोफदोषत्रयापहः ॥५५॥
मेधा तथैव विज्ञेया विशेषाद् बलवर्द्धिनी ॥५६॥

अथ विडाल नकुलनामगुणाः।

विडालकस्तु मार्जारो विषदंशक आखुभुक् ॥५७॥
नकुलः पिङ्गलो बभ्रुः सर्पारिः सर्पभक्षकः ॥५८॥

मार्जारो मधुरः स्निग्धो वीर्य्योष्णः कफवातजित् ॥५८॥
क्षतताम्रश्वासकासघ्नो नकुलोऽपि समो गुणैः ॥६०॥

अथ वानरनामगुणाः।

वानरो मर्कटः कीशो वनौकाश्च वलीमुखः।
हरिः शाखामृगः प्लावी प्लवङ्गः प्लवगः कपिः ॥६१॥
वानरो पवनश्वासभेदःपाण्डुक्रमीन् जयेत् ॥६२॥

अथ शृगालनामगुणाः।

शृगालो जम्बुकः फेरुर्गोमायुः फेरवः शिवः।
शिवेशो वञ्चकः क्रोष्टुः शृकालः स्वल्पजम्बुकः ॥६३॥
शृगालो बलदो हृद्यः सर्ववातक्षयापहः ॥६४॥

अथ मूषकनामगुणाः।

मूषकः खनकः स्तेयो हग उन्दुरुराखुकः ॥६५॥
मूषको बहविघ्नघ्नो वल्यो हृद्योऽनिलापहः ॥६६॥

[ इति चतुष्पदः। ]

अथ पक्षीनामगुणाः।

पक्षी विहङ्गमः पत्री शकुन्तर्विहगः खगः।
अण्डजो विः पतत्रः पतत्री शकुनिर्द्विजः ॥६७॥

अथ तित्तिरिनामगुणाः।

तित्तिरिश्चित्रपक्षः स्यात् कृष्णो गौरः कपिञ्जलः ॥६८॥
तित्तिरिर्बलदो ग्राही हिक्कादोषक्षयापहः।
श्वासकासहरः पथ्यस्तस्माद् गौरोऽधिको गुणैः ॥६९॥

अथ वर्त्तीकनामगुणाः।

वर्त्तीको वर्त्तिकश्चिस्तस्तोऽप्यवर्त्तका: स्मृताः ॥७०॥
वर्त्तिकोऽग्निकरः शीतो ज्वरदोषक्षयापहः ॥७१॥

अथ लावनामगुणाः।

लावश्चित्रितनुः स चतुर्द्धा मतो बुधैः।

पांशुलो गौरकोऽन्यस्तु पौण्ड्रको दर्भरस्तथा ॥७२॥
लावाः क्षुद्या हिमाः स्निग्धा ग्राहिणो वह्निदीपनाः ॥७३॥
पांशुलः श्लेष्मलस्तेषां वीर्योष्णोऽनिलनाशनः ॥७४॥
गौरकः कफवातघ्नो रूचो वह्निप्रदः परम् ॥७५॥
पौण्ड्रकः पित्तकृत् किञ्चिल्लघुः श्लेष्मा‌ऽनिलापहः ॥७६॥
दर्भरो रक्तपित्तघ्नो हृदामयहरो हिमः ॥७७॥

अथ चटकनामगुणाः।

चटकः कलविङ्कः स्यादन्यो ग्राम्यस्तु पुण्ड्रकः ॥७८॥
चटकः शीतलः स्निग्धः स्वादुः शुक्रकफप्रदः।
सन्निपातहरो, वैश्मचटकः शुक्रलः परम् ॥७९॥

अथ वार्त्तिकनामगुणाः।

वार्त्तीको मधुरः शीतः रूचश्च कफपित्तनुत् ॥८०॥

अथ पारावतादिनामगुणाः।

पारावतः कलरवो मन्द्रघोषो मदोत्कटः ॥८१॥
कपोतो घुघुकृत् पाण्डुरन्यः काणकपोतकः ॥८२॥
पारावतो गुरुः स्निग्धो रक्तपित्तानिलापहः।
सग्राही शुक्रलः शीतः कपोतोऽपि समो गुणैः ॥८३॥
किञ्चिल्लघुः परं काणकपोतः सर्वदोषकृत् ॥८४॥

अथ मयूरनामगुणाः।

मयूरश्चन्द्रकी केकी मेघरावो भुजङ्गभुक्।
शिखी शिखावलो वर्ही शिखण्डी नीलकण्ठकः।
शुक्लापाङ्गः कलापी च मेघनादानुलासकः ॥८५॥
मयूरो हंहणः श्रोत्रशिरोदृग्वातशोषजित्।
उष्णो वलायुर्मेधाग्निकेशत्वक्स्वरवर्णदः ॥८६॥
सेव्यं मयूरजं मांसं हेमन्ते शिशिरे मधौ।
न शरद्ग्रीष्मयोः पथ्यं वर्षास्वप्यहिभक्षणात् ॥८७॥

अथ कुक्कुटनामगुणाः।

कुक्कुटो विष्किरः शौण्डी कालज्ञश्चरणायुधः। 
कृकवाकुस्ताम्रचूडः स्यादन्योऽरण्यकुक्कुटः ॥८८॥
कुक्कुटो बृंहणः स्निग्धो वीर्य्योष्णोऽनिलजिद् गुरुः।
चक्षुष्यः शुक्रकफकृद्वन्यो रूक्षः कषायकः ॥८९॥
पानीयकुक्कुटः स्निग्धो बृंहणः श्लेष्मलो गुरुः ॥९०॥

अथ शुकनामगुणाः।

शुको रक्तमुखः कीरो वाग्मी सुन्दरदर्शनः ॥९१॥
सारिका रसिका दूती सुमतिः प्रियवादिनी ॥९२॥
शुकः शीतो लघुर्ग्राही चतकासक्षयापहः।
रुचस्तद्वन्मता सारी स्निग्धा बुद्धिबलाग्निकृत् ॥९३॥

अथ कोकिलनामगुणाः।

कोकिलः कलकण्ठः स्यात् परपुष्टो वनप्रियः।
पिकः परभृतात्माता ताम्राक्षो मधुदूतकः ॥९४॥
कोकिलो दीपनो ग्राही चक्षुष्यः क्षयकासजित् ॥९५॥

अथ काक-भासनामगुणाः।

काको ध्वाङ्क्षो गूढकामी बलिपुष्टः सकृत्प्रजः।
वायसो बलिभुक् काणः करटश्चतुरो द्विकः ॥९६॥
भासः शिखावान् भासन्तो गृध्राकारो रजःप्रजः ॥९७॥
काकभासभवं मांसं चक्षुष्यं दीपनं लघु।
आयुष्यं हृद्यं वल्यं क्षतरोगक्षयापहम् ॥९८॥

अथ गृध्रनामगुणाः।

गृध्रः सुदृष्टिः शकुनी वक्रदृष्टिश्च दूरदृक् ॥९९॥
गृध्रस्य काकवन्मांसं विशेषाच्चक्षुरोगजित् ॥१००॥

अथ हंसनामगुणाः।

हंसः श्वेतगरुत् मानसौका रक्तपदश्च सः ॥१०१॥

राजहंसः स्मृतः कृष्णैर्धार्त्तराष्ट्रोऽथ मालिकः ॥१०२॥
मलिनैः कलहंसस्तु पीतैः कादम्ब उच्यते ॥१०३॥
कारण्डवः प्लवो मद्गुर्वरटा हंसयोषितः ॥१०४॥
हंसः स्निग्धो गुरुर्वृष्यो वीर्य्योष्णः स्वरवर्णकृत् ।
वातास्रपित्तशमनो बृंहणो बलवर्द्धिदः ॥१०५॥

अथ चक्रवाक-कङ्कनाम ।

सारसो लक्ष्मणो रक्तमूर्द्धा स्यात् पुष्कराह्वयः ।
चक्रवाकः चक्रवयकचक्रौ मुकामुकः ।
रथाङ्गनामा कोकोऽथ कङ्कः स्याल्लोहपृष्ठकः ॥१०६॥

अथ वकनाम ।

वको वकोटो धवलो वलाका विषकण्ठिका ॥१०७॥

अथ आडिनाम ।

आडिः शरालिराटिश्च विचित्रजलचारिणौ ॥१०८॥

अथ चक्रादिमांसगुणाः ।

चक्रकङ्कवकोटादिमांसं स्निग्धं हिमं गुरु ।
मधुरं सृष्टविण्मूत्रं वातपित्तास्रनाशनम् ॥१०९॥

अथ करेटुनामगुणाः ।

करेटुकः कर्करेटुः करेटुः कर्कराटुकः ॥११०॥
करेटुः बृंहणो बल्यो वातपित्तहरो लघुः ॥१११॥

अथ खञ्जरीट-चाषनाम ।

खञ्जरीटः खञ्जनकश्चाषनामा किकीदिविः ॥११२॥

अथ चातकनाम ।

चातकस्तु घनतोलः सारङ्गस्तोकको भ्रमः ॥११३॥

अथ भारद्वाजादिगुणाः ।

भारद्वाजः कर्कराटो व्याघ्राटोऽङ्घ्रिकुटिः परः ।
खञ्जरीटो भरद्वाजश्चाषः श्लेष्मानिलापहः ॥११४॥

वातलोऽनिलपित्तघ्नो भारद्वाजः कफास्रजित् ॥११५॥

अथ श्येन-चिरिनामगुणाः ।

श्येनः शशादनः पत्री चिरिचिल्ली चिरिल्लिका ॥११६॥
श्येनचिरिभवं मांसं प्रायो दोषकरं गुरु ॥११७॥

अथ उलूकनामगुणाः ।

उलूकः कौशिकः काकवैरी घूको निशाचरः ॥११८॥
उलूकपललं भ्रान्तिकरं वातप्रकोपदम् ॥११९॥

अथ चकोरनामगुणाः ।

चकोरश्चन्द्रिकापायी जीवञ्जीवः सुलोचनः ॥१२०॥
चकोरो बृंहणो बल्यः स्निग्धोष्णो वातनाशनः ॥१२१॥

अथ क्रौञ्चादिनामगुणाः ।

क्रौञ्चकः पेचकोऽन्यस्तु पुच्छाधोभागलोहितः ।
वकोटः कुवरोऽप्यान्यः कोयष्टिष्टिट्टिभस्तथा ॥१२२॥
क्रौञ्चः पित्तानिलहरः पेचकः कफवातजित् ।
कुररः क्रौञ्चवत् ज्ञेयः टिट्टिभोऽस्मरुत्कारः ॥१२३॥

अथ मत्स्यनामानि ।

मत्स्यो झषस्तिमिर्मीनः शल्को वैसारिणोऽण्डजः ।
पृथुरोमाऽभिसारः स्याद्विसारः शकुली तथा ॥१२४॥

अथ रोहितादिमत्स्यनामगुणाः ।

रक्तोदरो रक्तमुखो रोहितो मत्स्यपुङ्गवः ॥१२५॥
सहस्रदंष्ट्रः पाठीनः श्यामवर्णो महाशिराः ॥१२६॥
शफरः क्षुद्रमत्स्यः स्यात् प्रोष्ठी तु शफरी स्मृता ॥१२७॥
शलमीनश्चिलिचिमस्तिमिः स्यातः समुद्रजः ॥१२८॥
मत्स्या बलप्रदा हृद्या गुरवः कफपित्तलाः ।
उष्णाभिष्यन्दिनः स्निग्धा बृंहणाः पवनापहाः ॥१२९॥
नादेया बृंहणा मत्स्या गुरवोऽनिलनाशनाः ॥१३०॥

कौप्या हृद्याः कफाष्ठीलामूत्रकृच्छ्रविबन्धदाः ॥१३१॥
ताड़ागा गुरवो हृद्याः शीतला मलमूत्रदाः ॥१३२॥
ताड़ागास्थिमजाता बलायुर्मतिवृद्धकराः ॥१३३॥
सरोजा मधुराः स्निग्धा बल्या वातनिबर्हणाः ॥१३४॥
सामुद्रा गुरवो नाति पित्तलाः पवनापहाः ॥१३५॥
तत्रापि लवणाम्भोजा बाहिणो दृष्टिनाशनाः ॥१३६॥
ह्रदोद्भवा बलकरा न तु स्वल्पजलोद्भवाः ॥१३७॥
हेमन्ते कूपजा मत्स्याः शिशिरे सारसा हिताः ॥१३८॥
मधुमौघाम्बुकालेषु नदीपौष्करतड़ागजाः ॥१३९॥
शरत्सु नैर्झराः सर्वे वर्षोत्थाः सर्वदोषदाः ॥१४०॥
रोहितः प्रवरस्तेषु नातिपित्तकरो लघुः ॥१४१॥
कषायानुरसो बल्यः पाठीनः शैवलो गुरुः ॥१४२॥

अथ क्षुद्रमत्स्य-मत्स्याण्डनामगुणाः।

क्षुद्रमत्स्याः स्वादुरसा दोषत्रयनिबर्हणाः ॥१४३॥
सूक्ष्माः परं पुंस्त्वहरा रुच्याः कासानिलापहाः।
त्रिदोषघ्नस्तिलोचिममत्स्यो बल्यः परं मतं ॥१४४॥
मत्स्यगर्भो भृशं हृद्यः स्निग्धः स्थैर्यकरो गुरुः।
कफमेदःप्रदो बल्यो ग्लानिकार्श्यविनाशनः ॥१४५॥

अथ शिशुमार मकरनामगुणाः।

शिशुमारो दन्तैस्तुल्यो मकरस्तिमिदंष्ट्रकः ॥१४६॥
शिशुमारो गुरुर्वृष्यः कफक्षतातनाशनः।
बृंहणो बलदः स्निग्धस्तद्वन्मकरमादिशेत् ॥१४७॥

अथ कच्छपनामगुणाः।

कच्छपो गूढपात् कूर्मः कमठो दृढ़पृष्ठकः ॥१४८॥
कच्छपो बलदः स्निग्धो वातजित् पुंस्त्वकारकः ॥१४९॥

अथ मण्डूकनामगुणाः ।
मण्डूकः प्लवगो भेको वर्षाभूर्दर्दुरो हरिः ॥१५०॥
मण्डूकः श्लेष्मलो नातिपित्तलो बलकारकः ॥१५१॥

अथ कर्कटनामगुणाः ।
कर्कटः क्रूरचक्षुः स्यात् कुलीरः षोड़शाङ्घ्रिकः ॥१५२॥
कर्कटो बृंहणो हृद्यः शीतलोऽसृग्दरापहः ॥१५३॥

अथ सर्पनामानि ।
सर्पो भुजङ्गो भुजगः फणी भोगी भुजङ्गमः ।
कुण्डली कञ्चुकी चक्री पन्नगः पवनाशनः ॥१५४॥
गूढपादुरगो नागो जिह्मगश्च सरीसृपः ।
चक्षुःश्रवा दीर्घपृष्ठो व्याल आशीविषस्त्वहिः ॥१५५॥
दर्वीकरो विषधरो दन्दशूको बिलेशय. ।
कुम्भीनसः पृदाकुः स्याद् दंष्ट्री काकोदरो विषी ॥१५६॥

अथ कुण्डलादि नाम ।
कुण्डली राजिलः शीघ्रोऽजगरो वाहसः शयुः ॥१५७॥
जलसर्पो गलार्दः स्यात् तिलित्सो गोनसः स्मृतः ॥१५८॥

सर्पमांसगुणाः ।
सर्पाणां स्वेहनं मांसं चक्षुष्यं बृंहणं गुरु ।
दूषीविषक्रिमिहरं मेधाग्निबलवर्द्धनम् ॥१५९॥

अथ गोधानामगुणाः ।
गोधा घोरपदा पञ्चनखरा जनिपस्तथा ॥१६०॥
कृष्णसर्पस्य गोधेयो गोधेरः स्युर्मंहागुणाः ॥१६१॥
गोधाऽग्निजननी बल्या हृद्या पित्तानिलापहा ॥१६२॥

अथ सद्योहतमांसगुणाः ।
सद्योहतं भवेन्मांसं व्याधिघाति यथाऽमृतम् ।
वयस्यं बृंहणं बलासम्प्या परिवर्जयेत् ॥१६३॥

अथ च्युतगर्भा-सगर्भागुणाः ।

वृद्धानां दोषलं मांसं बालानां बलदं लघु ॥१६४॥

च्युतगर्भा गुरुर्योषित् सगर्भाच तथा मता ॥१६५॥

अथ स्वयं मृतमांसगुणाः ।

स्वयं मृतमवल्यं स्यादतिसारकरं गुरु ॥१६६॥

अथ विषादिहतमांसगुणाः ।

विषाम्बुरुग्मृत स्त्रैसम् मृत्युदोषरुजाकरम् ॥१६७॥

अथ परिभाषा ।

विहङ्गेषु पुमान् श्रेष्ठः स्त्री चतुष्पदजातिषु ॥१६८॥

परार्द्धे लघु पुंसां स्यात् स्त्रीणां पूर्वार्द्धमादिशेत् ॥१६९॥

तुल्यजाति स्वल्पदेहा महादेहेषु पूजिताः ।

अल्पदेहेषु शस्यन्ते तथैव स्थूलदेहिनः ॥१७०॥

चेष्टावतां परं मांसमलसेभ्यो लघु स्मृतम् ॥१७१॥

देहमध्यं गुरु प्रायं सर्वेषां प्राणिनां स्मृतम् ॥१७२॥

पक्षक्षेपादिहृद्भानां तदेव लघु कथ्यते ॥१७३॥

गुरूण्यण्डानि सर्वेषां गुर्वीग्रोवाच पक्षिणाम् ॥१७४॥

ये मृगाविहगास्तोयदूरावासप्रचारकाः ।

ते नाभिष्यन्दिनः सर्वे विपरीतान्यतोऽन्यथा ॥१७५॥

जलानूपभवाः सर्वे जलानूपचराश्च ये ।

गुरुभक्ष्या गुरुतर तेषां मांससुदाहृतम् ॥१७६॥

धन्वोत्पत्तिप्रचाराणां लघु स्याल्लघुभोजिनाम् ॥१७७॥

उर स्कन्धोदर कुचौ पादौ पाणौ कटौ तथा ।

पृष्ठत्वक् यकृदन्त्राणि गुरूणीह यथोत्तरम् ॥१७८॥

इति मांसवर्गो द्वादश ।

—o—

## अथ मिश्रवर्गः ।

गोपालबालैः सहमल्लविद्याविनोददक्षं धृतकाकपक्षम् ।
उपास्महे वाङ्मनसातिदूरं महः परं नीलमचिन्त्यनीयम् ॥१॥

### अथ अनुपानादिगुणाः ।

वातेऽनुपानं स्निग्धोष्णं रूक्षोष्णं श्लेष्मणि स्मृतम् ।
पित्ते स्निग्धं हितं क्षेहपाने तोयमशीतलम् ॥२॥
भल्लातकस्नेहमूल्लीरोष्याणां शीतलं जलम् ।
शालिमुद्गादिभक्ष्याणां यूषो मांसरसस्तथा ॥३॥
मापादिभोजिनामस्तु धान्याम्लं दधि वा स्मृतम् ।
मद्यं शोषिविषार्त्तानामल्पाग्नीनाञ्च शस्यते ॥४॥
क्लान्तानामुपवासाध्वभारस्त्रीसुरतादिभिः ।
पयो सुधासमं प्रोक्तं क्षीणानां रक्तपित्तिनाम् ॥५॥
रसालं च दीपनं शीतमतिमात्रमथो गुरुः ।
उष्णानुपानतो भुक्तं सुखमन्नं प्रजीर्यति ॥६॥
तदादौ कर्षयेत् पीतं स्थापयेन्मध्यसेवितम् ।
पश्चात् पीतं बृंहयति तस्मात्वीक्ष्य प्रयोजयेत् ॥७॥
न पिबेच्छ्वासकासार्त्तोजत्रुरोगक्षतातुरः ।
पीत्वातिभाष्याध्ययन निद्रां न त्वरया भजेत् ॥८॥

### अथ ऊषापानम् ।

शल्यकानिलपित्तेषु चैकद्वित्रिपलोन्मितम् ।
वारि शस्तमूष काले दृष्टिकारि रसायनम् ॥९॥
वलीपलितवैस्वर्यपीनसश्वासशोषजित् ।
पानीयप्रसृतीरष्टौ यः पिबेदरुणोदये ॥१०॥
धान्येषु मांसे सकलेषु चैवं शाकेषु चानुक्रमिह प्रमादात् ।
आस्वादितो भूतगुणैश्च हीत्वा तदादिशेद् द्रव्यमनल्पबुद्धिः ॥११

अथ समावर्त्तोहितानि ।

षष्टिका यवगोधूमा लोहिता याश्च शालयः ।
मुद्गाढ़की मसूराश्च धान्येषु प्रवराः स्मृताः ॥१२॥
यः सदामलकैः स्नानं करोति स विनिश्चितम् ।
वलीपलितनिर्मुक्तो जीवेद्वर्षशतं सुखी ॥१३॥
भुक्त्वोपविशतस्तुन्दि बलमुत्तानशायिनः ।
आयुर्वामकटिस्थस्य मृत्युर्धावति धावतः ॥१४॥
रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ।
न तेषां स्वपतां दोषा जायतां चोपजायते ॥१५॥
भोजनानन्तरं निद्रा वातघ्नी कफपुष्टिकृत् ॥१६॥
कफमेदोविषार्त्तानां रात्रौ जागरणं हितम् ।
दिवास्वप्नश्च तृट्शूलहिक्काजीर्णातिसारिणः ॥१७॥

अथ दन्तधावनगुणाः ।

दन्तधावनमुद्दिष्टमास्यवैरस्यकारणम् ।
मलेवावचिद्दौर्गन्ध्यमलपित्तकफापहम् ॥१८॥
मदातुरः क्षयः श्वासी दन्तताल्वोष्ठरोगवान् ।
हिक्काच्छर्दिशिरःपीड़ामूर्च्छाशोषी न तच्चरेत् ॥१९॥

अथ मुखप्रक्षालनगुणाः ।

मुखप्रक्षालनं शीतपयसा रक्तपित्तजित् ।
मुखस्य पिडकाशोषनीलिकाव्यङ्गनाशनम् ॥२०॥

अथ पादप्रक्षालनगुणाः ।

पादप्रक्षालनं दृष्टिकरं तथ श्रमापहम् ॥२१॥
निद्रासुखकरः सुतिश्रमनेत्ररुगापहः ॥२२॥

अथ गण्डूषगुणाः ।

स्नेहगण्डूषकरणं मुखशोषहिलामयान् ।
स्वरधातौष्ठपारुष्यरक्तवातान् विनाशयेत् ॥२३॥

सुखोष्णोदकगण्डूषः कफारुचिमलापहः ॥२४॥
विषमूर्च्छामदार्त्तानां शोषिणां रक्तपित्तिनाम्।
कुपिताक्षिमल-क्षीण-रूक्षाणां न प्रशस्यते ॥२५॥

अथ अञ्जनगुणाः।

अञ्जनं नेत्रनैर्मल्यं दृष्टिकारि रुजापहम् ॥२६॥
रात्रौ जागरितः श्रान्तश्छर्दितो भुक्तवां स्तथा।
ज्वरातुरः शिर स्नातः कदाचिन्न तदाचरेत् ॥२७॥

अथ व्यायामगुणाः।

व्यायामः कर्मसामर्थ्यं स्थैर्यं दोषक्षयाग्निकृत्।
स सदा गुणमाधत्ते बलिनां स्निग्धभोजिनाम् ॥२८॥
व्यायामदृढचित्तानां व्याधिर्नास्ति कदाचन ॥२९॥
विरुद्धं वा विदग्धं वा भुक्तं शीघ्रञ्च पच्यते।
भवन्ति शीघ्रं नैतस्य वलीशिथिलताजराः ॥३०॥
वसन्ते शीतसमये सुतरां स मतो हितः।
अन्यदापि स कर्त्तव्य शक्त्यर्द्धेन यथाबलम्।
तदा समीक्ष्य स्वस्वेदो कक्षे शीवान्ललाटयोः ॥३१॥
भुक्तवान् जनसम्भोगः कासी श्वासी क्षयी क्षमः।
रक्तपित्ती क्षमी शोषी न तं कुर्य्यात् कदाचन।
अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ॥३२॥

अथ मर्दन कर्त्तनगुणाः।

मर्दनं श्रमवातघ्नं निद्रापुष्टिवलप्रदम् ॥३३॥
केशश्मश्रुनखानाञ्च कर्त्तनं शुचिरूपकृत् ॥३४॥

अथ अभ्यङ्गगुणाः।

अभ्यङ्गो वातरोगघ्नो धातुसाम्यं बलं सुखम्।
निद्रावर्णमृदुत्वायुष्कुरुते देहपुष्टिकृत् ॥३५॥
शिरोऽभ्यङ्गः शिरस्तृप्तिकेशदार्ढ्याक्षिपुष्टिकृत्।

केशप्रसाधनः केश्यः रजोजन्तुमलापहः ।
पादाभ्यङ्गः सदा दृष्यो बलोत्साहविवर्द्धनः ॥३६॥
सद्भैः श्रवणबाधिर्यं न च मन्याहनुग्रहान् ।
कदापि कर्णरोगाणां कुरुते कर्णपूरणम् ॥३७॥
सिक्तस्याद्रिर्यथा मूले तरूणां पल्लवादय ।
वर्द्धन्ते हि तथा नृणां स्नेहसिक्तस्य धातव ॥३८॥
स्नेहावगाहनं वातशमनं धातुपुष्टिदम् ।
मात्राभिस्त्रिचतुःपञ्चषड्सप्ताष्टभिरावजेत् ।
रसरक्तमांसमेदोमज्जाधातून् यथाक्रमम् ॥३९॥
वान्तो नवज्वरोऽजीर्णी विरिक्तः केवलामकफ् ।
निरूढतर्पणं यश्च स्नेहाभ्यङ्गादि वर्जयेत् ॥४०॥

अथ उद्वर्त्तनगुणाः ।

उद्वर्त्तनं वातहरं कफकानलदीपनम् ।
गात्रस्थिरत्वसुखितात्वक्प्रसादकृदुत्तमम् ॥४१॥

अथ स्नानगुणा ।

स्नान वातश्रमक्लेदघामाकण्डूमलापहम् ।
हृद्यं कान्तिकरं वह्निसर्वेन्द्रियविबोधनम् ॥४२॥
न तदुष्णं न शिरसो योज्यं नेत्राहितं यतः ।
कफवातप्रकोपे तु भेषजार्थे तदाचरेत् ॥४३॥
तथातिसारज्वरितकर्णशूलाऽनिलार्त्तिषु ।
आध्मानारोचकाजीर्णभुक्तवत्सु च गर्हितम् ॥४४॥

अथानुलेपादिधारणगुणाः ।

अनुलेपश्रमामूर्च्छादौर्गन्ध्यश्रमवातजित् ।
सौभाग्यतेजस्त्वग्वर्णप्रीत्योजोबलवर्द्धन. ॥४५॥
कौशेयाम्बररत्नाना धारण कान्तिकारकम् ।
पापरक्षोघ्नदुःखहरं कामदं श्रीविवर्द्धनम् ॥४६॥

सुखोष्णोदकगण्डूषं कफारुचिमलापहं ॥२४॥
विषमूर्च्छामदार्त्तानां शोषिणां रक्तपित्तिनाम् ।
कुपिताचिमलं चीणं रूचाणां न प्रशस्यते ॥२५॥

अथ अञ्जनगुणाः ।

अञ्जनं नेत्रनैर्मल्यं दृष्टिकारि रुजापहम् ॥२६॥
रात्रौ जागरितं श्रान्तश्छर्दितो भुक्तवांस्तथा ।
ज्वरातुरः शिरःस्नातं कदाचिन्न तदाचरेत् ॥२७॥

अथ व्यायामगुणाः ।

व्यायामः कर्मसामर्थ्यं स्थैर्यं दोषचयाग्निकृत् ।
स सदा गुणमाधत्ते बलिनां स्निग्धभोजिनाम् ॥२८॥
व्यायामदृढचित्तानां व्याधिर्नास्ति कदाचन ॥२९॥
विरुद्धं वा विदग्धं वा भुक्तं शीघ्रं प्रपच्यते ।
भवन्ति शीघ्रं नैतस्य वलीशिथिलताजराः ॥३०॥
वसन्ते शीतसमये सुतरां स मतो हितः ।
अन्यदापि स कर्त्तव्यः शक्त्यर्द्धेन यथाबलम् ।
तदा समोष्णः स्वेदो कण्ठे शीर्षाललाटयोः ॥३१॥
भुक्तवान् कृतसम्भोगः कासी श्वासी क्षयी क्षमः ।
रक्तपित्ती व्रणी शोषी न तं कुर्य्यात् कदाचन ।
अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ॥३२॥

अथ मर्दनकर्त्तनगुणाः ।

मर्दनं श्रमवातघ्नं निद्रापुष्टिबलप्रदम् ॥३३॥
केशश्मश्रुनखादीनां कर्त्तनं शुचिरूपकृत् ॥३४॥

अथ अभ्यङ्गगुणाः ।

अभ्यङ्गो वातरोगघ्नो धातुसाम्यं बलं सुखम् ।
निद्रावर्णमृदुत्वायुष्कुरुते देहपुष्टिकृत् ॥३५॥
शिरोऽभ्यङ्गः शिरस्तृप्तिकेशदार्ढ्यादिपुष्टिकृत् ।

केशप्रसाधनः केश्यः रजोजन्तुमलापहः ।
पादाभ्यङ्गः सदा पथ्यो बलोत्साहविवर्द्धनः ॥३६॥
उच्चैः श्रवणबाधिर्यं न च मन्याहनुग्रहान् ।
कदापि कर्णरोगाणां कुरुते कर्णपूरणम् ॥३७॥
सिक्तस्याद्रियथा मूले तरूणां पल्लवादयः ।
वर्द्धन्ते हि तथा नृणां स्नेहसिक्तस्य धातवः ॥३८॥
स्नेहावगाहनं वातशमनं धातुपुष्टिदम् ।
मात्राभिस्त्रिचतुःपञ्चषड्सप्ताष्टभिरावजेत् ।
रसरक्तमांसमेदोमज्जाधातुन् यथाक्रमम् ॥३९॥
वाम्तो नवज्वरोऽजीर्णी विरिक्तः केवलामरुक् ।
निरूहतर्पणं यश्च स्नेहाभ्यङ्गादि वर्जयेत् ॥४०॥

अथ उद्वर्तनगुणाः ।

उद्वर्त्तनं वातहरं श्लेष्मकानलदीपनम् ।
गात्रस्थिरत्वसुस्निग्धत्वक्प्रसादमृदुत्वकृत् ॥४१॥

अथ स्नानगुणाः ।

स्नानं वातश्रमस्वेदपामाकण्डूमलापहम् ।
हृद्यं कान्तिकरं वह्निसर्वेन्द्रियविबोधनम् ॥४२॥
न तदुष्णं न शिरसो योग्यं नेत्राहितं यतः ।
कफवातप्रकोपे तु भेषजार्थे तदाचरेत् ॥४३॥
तथातिसारज्वरितकर्णशूलाऽनिलार्त्तिषु ।
आध्मानारोचकाजीर्णभुक्तवत्सु च गर्हितम् ॥४४॥

अथानुलेपादिधारणगुणाः ।

अनुलेपलयामूर्च्छादौर्गन्ध्यश्रमवातजित् ।
सौभाग्यतेजस्त्वग्वर्णप्रीत्योजोबलवर्द्धनः ॥४५॥
कौशेयास्वररत्नानां धारणं कान्तिकारकम् ।
पापरक्षोग्रहहरं कामदं श्रीविवर्द्धनम् ॥४६॥

रोगकृद् विषजुष्टानां चततृणविलासिनाम् ॥६६॥
विदाहो वातलः श्वासकफशोफवतां हितः ॥६७॥
दक्षिणः पवनः स्वादु रक्तपित्तहरो लघुः।
अविदाहप्रदो वल्यः चक्षुष्यो न च वातलः ॥६८॥
पश्चिमः पवनो रूक्षस्तीक्ष्णः स्नेहबलापहः।
विषदः शोषणो नृणां कफमेदोहरो लघुः ॥६९॥
उत्तरो मारुतः शीतः स्निग्धदोषप्रकोपकृत्।
क्लेदनः प्रकृतिस्थानां बलदो मधुरो मृदुः ॥१००॥
क्षयशोषविषार्त्तानां विशेषाद् गुणकारकः ॥१०१॥

अथ मधुररसगुणाः।

रसो मधुरकः शीतो धातुस्तन्यबलप्रदः।
चक्षुष्यो वातपित्तघ्नः कुर्य्यात् स्थौल्यकफक्रमीन् ॥१०२॥
सोऽतियुक्तो ज्वरश्वासगलगण्डार्बुदादिकृत् ॥१०३॥

अथ अम्लरसगुणाः।

रसोऽम्लः पाचनो रुच्यः पित्तश्लेष्मकरो लघुः।
लेखनोष्णो बहिः शीतः क्लेदनः पवनापहः ॥१०४॥
सोऽतियुक्तः परं देहे रक्तपित्तादिरोगकृत् ॥१०५॥

अथ कटुरसगुणाः।

कटुकः पित्तमः श्लेष्मक्रिमिकण्डूविषापहः ॥१०६॥
आग्नेयो वातकृद्रान्थभेदःस्थौल्यहरो गुरुः।
सोऽतियुक्तो भ्रमस्त्रोभतातृशोषातिदाहदः ॥१०७॥

अथ तिक्तरसगुणाः।

तिक्तः शीतस्तृषामूर्च्छाज्वरपित्तकफान् जयेत्।
वातमोऽग्निकरः श्वासशोधनः शोषणो लघुः ॥१०८॥
सोऽतियुक्तः शिरःशूल मन्यास्तम्भ भ्रमार्त्तिकृत् ॥१०९॥

अथ लवणरसगुणा ।

लवण शोधनो रुच्य पाचन कफपित्तद ।
पुस्त्वघातहर कायशैथिल्यमृदुताकर ॥८०॥
सोऽतियुक्तोऽचिपाकासपित्तकोठाचितापक्षत् ॥८१॥

अथ कषायरसगुणा ।

कषायो रोपणो ग्राही शोधणो वातकोपन ।
सोऽतियुक्तो ग्रहाध्मानहृत्पीडाक्षेपणादिक्षत् ॥८२॥
प्रसन्नदृष्टिर्हढदन्तकेश शशाङ्कवक्त्र पलितैर्विहीन ।
पिकाभकण्ठ कमलास्यगन्धो तत्पोपसेवी भवतीह मर्त्य ॥८३

अथ वमनगुणा ।

कासोपलेपस्वरभेदनिद्रातन्द्रास्यदौर्गन्ध्यविषोपसर्गा ।
कफप्रसेको ग्रहणीप्रदोषा न सन्ति जन्तोर्वमत कदाचित् ॥८४

अथ विरेचनगुणा ।

बुद्ध प्रसाद बलमिन्द्रियाणा धातुस्थिरत्व ज्वलनातिदीप्तिम् ।
चिराद्य पाक वयुप करोति विरेचन सम्यगुपास्यमानम ॥८५॥

वस्तिकर्मादिगुणा ।

वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते ।
ससर्ग सन्निपाते च वस्तिरेव हित सदा ॥८६॥
वमन श्लेष्मपित्तघ्न विरक्तो रक्तपित्तहा ॥८७॥
वस्तिर्वातहरा ज्ञेया स्वेदे मान्द्यापकारक ॥८८॥

मूले निषिक्तो हि यथा द्रुम स्यात्
नीलच्छद कोमलपल्लवाग्र ।
काले हृहत्पुष्पफलप्रदश्च
तथा नर स्यादनुवासनेन ॥८९॥

अथ रक्तमोक्षणगुणा ।

त्वग्दोषा ग्रन्थय शोफा रोगा शोणितसम्भवा ।

कुन्देन्दु स्वच्छकीर्त्तिं परमददलनोद्दानदीर्घ कदम्ब ।
यस्याकर्ण्य प्रभूत प्रथितगुणगण कर्णसाफल्यभाजो
दैव निन्दन्ति लोका नयनविफलताखेदमावेदयन्त ॥१०५॥

जननयनसुधाशुस्तस्य शुद्धस्तनूजो
जगति भरणपाले चोणिपालो बभूव ।
सफलसकलवाञ्छासिद्धिहेतोर्विधाता
सुरतरुवरचक्रं यत्करच्छद्मनैव ॥१०६॥

हरिश्चन्द्रस्तस्मात् समजनि जनानन्दजननो
हरिश्चन्द्रो लोके परवनपरीतापकरण ।
पर विश्वामित्रे व्यहितमयमाधत्त मतिमान् ।
विशिष्टो नैतस्माज्जगति महितोऽन्य सुकृतिन ॥१०७॥

तस्मादभूदङ्गतक्षत्यमान्य साधारणी भूमिपतिर्वदान्य ।
दारिद्र्यसुग्मूल्य पुन स्ववैरिष्वस्यापि काम क्षपयेध येन ॥१०८॥

अजनि सहजपालस्तस्य पूर्वस्तनूज
सकलगुणनिधान शास्त्रधर्मैकवेत्ता ।
प्रथितपुरुपरक्ष य समालोक्य लोका
बहुविधिषु विधातु कान्तता मन्यते स्म ॥१०९॥

यो राज्ञा मुखतिलक कटारमल्ल
स्तन श्रीमदननृपेण निर्मितेऽत्र ।
ग्रन्थेऽस्मिन् मदनविनोदनाम्नि पूर्णो
वर्गोऽय गुणगणमिश्रमिश्रकोऽयम् ॥११०॥

समाप्तोऽय ग्रन्थ ।

रक्तमोक्षणशीलानां न भवन्ति कदाचन ॥८०॥

अथ ऋतुचर्या ।

संहर्षात् कुपिता भवन्ति हि मला वर्षासु वातादयः
क्लिन्नत्वाद् वपुषोऽनले क्षणतरे वैद्येन देयं ततः ।
अन्नं दीपनपाचनञ्च मलहृत् क्लेदापहोपद्रवं
रूक्षं नातिकषायतिक्तकटुकं स्निग्धञ्च किञ्चिद्रसैः ॥८१॥
दिव्यं चौञ्जमथाम्बु तप्तशिशिरं मक्षौद्रमल्पं पिबेत्
गच्छन्त्योषधयो विदाहमधिकं तारुण्ययोगात्तदा ।
व्यायामार्कमरीचिमैथुनसुखावश्यायवर्ज्यं ततः
भूवाष्पाम्बुभुजङ्गदंशमशकैर्वर्ज्यं शयीतालये ॥८४॥
शीतोत्थे मृदुवातवृष्टिजनिते साङ्गारयाने गृहे
निर्वाते क्षितिपः शयीत मधुरं किञ्चिच्च पीत्वासवम् ।
काश्मीरागुरुलेपभूषिततनुः श्रेष्ठाङ्गनाभिर्व्रजेत्
गुर्वन्नव्यञ्जनावगाहनरतिं स्वापन्दिवा च त्यजेत् ॥८५॥
सेव्याः स्वादुकषायतिक्तविशदा वर्षे त्यजेज्जाङ्गलं
द्राक्षाक्षीरसितेक्षुशालिमधुरा गोधूममुद्गादयः ।
नैर्मल्यादखिलं जलं लघुतरं वासः स्रजश्चन्दनं
सेवेतेन्दुकरान् प्रदोषसमये गाहेत साक्षं सरः ॥८६॥
वर्षास्वपचितं विरेचविधिना पित्तं हरेद् बुद्धिमान्
युक्त्या रक्तविमोक्षणेन हविषस्तिक्तस्य पानं तथा ।
रात्रौ जागरणं व्यवायमधिकं घर्मं तुषारं दधि
क्षाराम्लोष्णविदाहि तीक्ष्णकटुकं निद्रां दिवा च त्यजेत् ॥८७
हेमन्ते लवणाम्लतिक्तकटुका क्षारोत्कटं हंसव
सर्पिस्तैलसमेतमुष्णमशनं तीक्ष्णानि पानानि च ।
सेवेतागुरुकं पितोऽम्बु शिशिरञ्चाहेत तैलन्तुतः
कौशेयास्तरणे शयीत शयने साङ्गारयाने गृहे ॥८८॥

श्यामापीनपयोधरोरुजघनामाश्लिष्य धन्योऽङ्गनां
वाह्लीकागुरुलेपभूषिततनुं धूपैर्वरैर्धूपिताम्।
कामं मैथुनमद्यतर्पितवपुः सेवेत वल्ये रसैः
कर्त्तव्यः शिशिरेऽयमेव नितरां शीताधिकत्वाद्विधिः ॥९९॥

तीक्ष्णाक्षारकषायरूक्षकटुकं कोष्णं वसन्तेऽशनं
तन्मद्यं मधुसुद्गजाङ्गलयवप्रायं हितं निर्मलम्।
व्यायामं विपिनञ्च कोकिलकलालापाकुलं कामिनी-
स्नानोद्वर्त्तनचन्दनानि नृपतिः सेवेत रम्याः स्रजः ॥१००॥

हेमन्ते निचितः प्रकुप्यति कफो भानोः करैराहत-
स्तस्मात् तीक्ष्णशिरोविरेकवमनैर्गण्डूषधूपादिभिः।
त प्राज्ञो विजयेच्च विश्वजन्दक्षायैरथोष्णाम्बुभिः
शीतस्निग्धगुरुद्रवाम्लमधुरं निद्रां दिवा च त्यजेत् ॥१०१॥

ग्रीष्मे शीतगृहान् सरांसि सरितो वापीर्वनानि स्रजो
हारान् शीतलतामहन्तपवनान् सेवेत निद्रां दिवा।
वासांस्यच्छलघून्यनुष्णमधुरं चान्नं ससर्पिर्द्रवं
मन्थक्षीरसुपानकानि च सितादिस्वादूनि शीतान्यपि ॥१०२॥

शुभ्रे हर्म्यतले शयीत शयने प्रत्यग्रपुष्पाचिते
वातैश्चन्दनचन्द्रचर्चिततनुः संस्पृश्यमानः सुखे।
व्यायामं परिशोषिमैथुनरतिं घर्मं तथोष्णं रसा-
नाग्नेयान् परितस्त्यजेन्मतिमतो वैद्यस्य वाक्ये रतः ॥१०३॥

अथ ग्रन्थकृत् परिचयः।

टोकान्वये महति भूमिभुजां विशुद्धे
काकेति नाम नगरं जगति प्रसिद्धम्।
यद्वेधसा विहितमादरतः स्वसृष्टे-
रुत्कृष्टतातिशयपुष्टदिदृक्षयेव ॥१०४॥

तत्र श्रीरत्नपालः समजनि जनतानन्दहन्दैककन्दः

कुन्देन्दुः स्वच्छकीर्त्तिः परमदद्दलनीद्दानदीर्घैकदर्पः ।
यस्याकर्ण्य प्रभूतं प्रथितगुणगणं कर्णसाफल्यभाजो
देवं निन्दन्ति लोका नयनविफलताखेदमावेदयन्तः ॥१०५॥

जननयनसुधांशुस्तस्य गुह्रस्तनूजो
जगति भरणपाले चौणिपालो बभूव ।
सकलसकलवाञ्छासिद्धिहेतोर्विधाता
सुरतरुवरचक्रं यत्करच्छद्मनैव ॥१०६॥

हरिचन्द्रस्तस्मात् समजनि जनानन्दजननो
हरिचन्द्रो लोके परबलपरीतापकरणः ।
परं विश्वामित्रे व्यहितमयमाधत्त मतिमान् ।
विशिष्टो नैतस्माज्जगति महितोऽन्यः सुकृतिनः ॥१०७॥

तस्मादभूदङ्गतकलमान्यः साधारणो भूमिपतिर्वदान्यः ।
दारिद्र्यमुन्मूल्य पुनः स्ववैरिष्वस्यापि कामं कृपयैव येन ॥१०८॥

अजनि सहजपालस्तस्य पूर्वस्तनूजः
सकलगुणनिधानं शास्त्रधर्मैकवेत्ता ।
प्रथितपुरुषरत्नं य समालोक्य लोका
बहुविधिषु विधातुः कान्ततां मन्यते स्म ॥१०९॥

यो राज्ञां मुखतिलकः कटारमल्ल-
स्तेन श्रीमदननृपेण निर्मितेऽत्र ।
ग्रन्थेऽस्मिन् मदनविनोदनाम्नि पूर्णो
वर्गोऽयं गुणगणमिश्रमिश्रकोऽयम् ॥११०॥

समाप्तोऽयं ग्रन्थः ।